'श्रीः'

# राष्ट्रपतिराजेन्द्रवंशप्रशस्तिः

रचयिता

भारतप्रख्यातस्य ज्यौतिषाचार्य-ज्यौतिषरत्न-ज्यौतिषालङ्कारोपाधि-
विभूषितस्य महामानसस्य पण्डितप्रवरस्य
पूज्यतमस्य स्वर्गतस्य "उग्रनाथ झा"
शर्मण आत्मजन्मा—

## श्री विष्णुकान्त झाः

प्रकाशकः—

पुरन्दरपुर, पाटलिपुत्रवास्तव्यस्य ज्यौतिषरत्न-ज्यौतिषाचार्य-
ज्यौतिषपञ्चानन-दैवज्ञशिरोमणिपदवीसमलङ्कृतस्य
ख्यातनाम्नः पण्डितस्य राष्ट्रपति-
राजेन्द्रवंशप्रशस्ति-निर्मातुः-

आत्मजः

## श्री देवकान्त झाः

ग्रामो वैकुण्ठपुरम्, पत्रालयो वैकठपुर ( खुशरूपुर ), पटना मण्डलम्

प्रथमसंस्करणम् २१००
२०१५ विक्रमाब्दाः ।

## समर्पणम्—

इह ये सर्वस्वसमर्पणैर्भारतस्य
स्वातन्त्र्यं समर्जितवन्तस्तेभ्यः
सम्मान्यशाश्वतकीर्त्तिभ्यो
देशभक्तेभ्यः
सबहुमानम्

इतिशम्
—ग्रन्थकारः



**महामनाश्चरितनायकः**

( स्वतन्त्र-गणतन्त्र-भारतस्य प्रथमराष्ट्रपतिः "देशरत्न, डॉ०" श्रीराजेन्द्रप्रसादः )

सत्यमेव जयते

Bihar Governer's Camp

पटना

तिथि १० मई, १९५७

## आमुखम्

सन्ति कत्यपि जीवनचरितानि विविधभाषासु महाविभूतेर्भारतीयगणतन्त्र-राज्यस्य राष्ट्रपतेः डॉक्टरेत्युपाधिना समलङ्कृतस्य श्री राजेन्द्रप्रसादस्य। अपि तु सर्वेषु चरित्रेषु हिन्दीभाषायां यदस्ति आत्मकथनमित्यभिधानेन भूरि प्रसिद्धं स्वयं राष्ट्रपतिना लिखितं तदेवात्यन्ताधिकृतं लोकप्रियं च। किंतु न किमपि चरितं विरचितं दृष्टं मया संस्कृतभाषायां या भाषा यथेयं विराजति मातृस्थानेऽनेकभारतीय भाषाणाम्। तस्मादतीव स्वागतार्होऽयं चरित्रलेखनप्रयत्नो यः कृतः पण्डितमहोदयेन झोपाख्य श्रीविष्णुकान्तशर्मणा।

द्वे महाकार्ये साधिते पण्डितवर्येण चरित्रविशेष-विरचनप्रसङ्गेन—संस्कृत-सेवा राष्ट्रसेवा च।

जानन्ति सर्वे आबालवृद्धाः श्री विष्णुकान्तमहोदयानां संस्कृतविद्याविशारदत्वं ज्योतिर्ज्ञानसम्पन्नत्वं च। साकल्येन पूर्णतया च राष्ट्रपतेर्जीवनचरितमपि विदित-वन्त इमे इत्यद्य सुस्पष्टमनुना ग्रन्थेन। कोऽन्यो योग्यतरो भवेद् गीर्वाणभाषायां राष्ट्रपतेरितिहासरचनाकार्ये ऋते पण्डितझामहोदयात्।

अस्मिंश्चरित्रे मया दृश्यते त्रिवेणिसङ्गमः।

भारतसंस्कृतेरपरमूर्त्तिरेवेति प्रथितमहायशा गुणगणनिधिर्लोकेन्द्रो "विद्या-मार्त्तण्डः" श्रीराजेन्द्रप्रसादश्चरित्रनायकः। रचयिता विद्याविनयसम्पन्नो महा-पण्डितः काव्यकुशलो विष्णुकान्तसूरिः। भाषाऽपि संस्कृतं सकलभारतीयसंस्कृति-भाण्डारभूतत्वादन्वर्थनाम। तस्मात् किमाश्चर्यं यदयं ग्रंथोऽर्थगर्भो रोचकोऽत्युपयुक्तो भवति सर्वेभ्यो भारतीयेभ्यः।

नैतत्सदृशग्रन्थाय कस्याप्यामुखस्यावश्यकताऽस्ति। स्वयं प्रकाशमाने पदार्थे नास्त्यवकाशः पुनः प्रदर्शनाय।

संस्कृते यदयं प्रथमः प्रयत्नः प्रशंसनीयोऽनुकरणीयोऽप्यस्ति। पण्डितेषु पामरेष्वपि ग्रन्थोऽयं प्रियो भवतु, भवतु स्फूर्तिदायकश्च सर्वेभ्यो वाचकेभ्यः।

इत्यलम्।

रंगनाथ दिवाकरः
विहार-राज्यपालपदस्थः

CHIEF JUSTICE
PATNA

HIGH COURT
PATNA
*4th June, 1957*

## Hon'ble Mr. V. Ramaswami *I. C. S.*

*BARRISTER-AT-LAW*

*Chief Justice Patna High Court*

### प्रस्तावना

अस्माकं राष्ट्रपतेः सुगृहीतनामधेयस्य श्रीमतो डाक्टर राजेन्द्रप्रसादस्यं जीवितं सर्वं नूनमतिमहिते परार्थं क्रियमाणे त्यागात्मके आत्मार्पणे उदाहरणतामर्हति। त्यागश्च सर्वोऽस्मन्मातृभूमेः कैंकर्यकरणहेतोरेव। १६१० तमे वर्षे महामतिनाऽनेन स्वज्येष्ठभ्रातरं प्रति कश्चन लेखो लिखितः। तत्र ह्येवं लिखितमस्ति—"परिणामशालिनि प्रपंचेऽस्मिन् नश्यन्त्येव सर्वेऽपि धनं, वर्णः, पूज्यत्वमित्यादयः। भवता यावदपेक्ष्यते तावतो धनस्य स्वामित्वं यद्यनुभूयते च पुनरपि ततोऽधिकं धनं भवताऽभिकाङ्क्ष्येतैव जना यदि कांचनलाभेनैव तृप्तिं मन्यन्ते। ये नाम यत्किंचिदपि जानन्ति, जानन्त्येव ते सुखं न बाह्यसाधनैकलभ्यं किन्त्वान्तरभावतैवेति। तस्मात् दारिद्र्यं मा नाम विनिन्दामो यतो लोकेऽतीव महान्तोऽपि नितरां निःस्वा निकृष्टतया गण्यमानाः परिभूयमानाश्च दृश्यन्ते" इति। अनया वचनशैल्या मन्ये, सुष्ठु प्रकटीकृतं श्रीमतो राष्ट्रपतेः सौशील्यं सर्वं सर्वेषां व्याख्यानकुंचिकात्वेन उपादेयमिति। स हि विशेषतो विशालमनस्कता, दीनेषु दुःखितेषु च दया, सर्वत्र क्षमा, आत्मन्यन्यादृशमतित्वं, विचार-निर्णय कौशलं, जगदर्थं आत्मार्पणसामर्थ्यमित्यादिगुणगणानामेको निधिरिव राजते। सम्प्रति सोऽस्मद्देश-जीवातवे तदभिवृद्ध्यै च बद्धादरो मुख्यामादर्शपुरुषतामावहति। सन्दर्भेऽस्मिन् स्मरामि खल्वहमाङ्गलकवेः श्वेतशिरो ( White Head ) नाम्नः उक्तिभङ्गीं "विना महाभागत्वं स्वाभाविकमात्मगुणपरिशीलनमशक्यम्" इति। अतएव च हेतोर्वयं महतां देशनेतॄणां जीवितचरितानि लिखामः, पठामः, परिपालयामश्च तदीयमुदाहरणं यत् सर्वेष्वपि कालेषु प्रेरयेदस्मान्

सत्पथे, नियमयेदिति च। अयमन्यतमः प्रकारोऽस्माकं देशीयमहापुरुषगुणानुसन्धानस्य, सान्ततिकस्येव वित्तस्य, यत् तदीय जीवितचरितस्य काव्यतया निबन्धनं—तस्मादहमतीवाभिनन्दामि पण्डितानां पुरतः प्रशंसामि च प्रबन्धमेनं, श्रीमन्तं राष्ट्रपतिमधिकृत्य श्रीमता विष्णुकान्तझानाम्ना विदुषा विरचितं समीचीनैः पद्यैः संस्कृतभाषामयैरिति।

अहमतिप्रसीदामि समीक्ष्येदं यत् विपश्चिद्वरः श्रीविष्णुकान्तः 'झा' शर्मा ज्यौतिषशास्त्रीयाप्रतिमप्रतिभाविभासितः काव्य-कुशलो लेखकोऽस्य, अस्य काव्य-रचनायां माधुर्य्यं सारल्यं प्रसादश्च समुद्भासते। इदानीन्तनस्य भारतीयस्य कस्यापि महापुरुषस्य सम्बन्धे नैतादृशो विलक्षण ग्रन्थो विलिखितः केनापि। संस्कृतवाङ्मयैर्ललितैर्नानाविधैश्छन्दोभिः श्लाघ्यं भावपूर्णं यथातथं तथ्यं पूर्वापरपरिवारसहितस्य श्रीमतो राजेन्द्रप्रसादस्य चरित्रवर्णनं तथा तत्सम्बद्धानां वरजानामवरजानां स्वातन्त्र्यहेतुककृतप्रयत्नानां देशनेतॄणां गुणचर्चादि काव्ये विनिवेशितमिति सुवर्णे सुगन्धवत् प्रतिभाति। एवञ्चात्र चरित्रनायकेन श्रीमद्राष्ट्रपतिना सह वर्णितानां महतां देशप्रेमवतां गुणाङ्कनं सुस्पष्टं प्रथयति—"रत्नं समागच्छतु काञ्चनेन" इति, संस्कृते प्रथमोऽयं प्रयत्नः समादरणीयः। ग्रन्थश्चायं प्रशंसनीय एवेति सम्मनुते।

वी० रामस्वामी
प्रधानन्यायाधीशः
उच्चन्यायालयस्य
पाटलिपुत्रस्थितस्य

*Dr. M. S. Aney*

Civil Lines
Nagpur I.
*Date*—6-4-58

श्री विष्णुकान्तकविकृत राजेन्द्रप्रशस्तिग्रन्थकृते सम्मतिः—

राष्ट्रपतेर्नृवीरस्य चरितं हर्षवर्षकम् ।
श्रीराजेन्द्रप्रसादस्य पठन्तु सुजनाः सदा ॥१॥

राजेन्द्रस्य कथा रम्या निर्मला जाह्नवी यथा ।
स्पर्शपानाशनैर्नित्यं त्रस्तानां सुखदायिनी ॥२॥

कर्त्तव्याऽऽचरणे नित्यं युवकोत्साहवर्धिनी ।
दीपिकेव गृहस्थानां वृद्धानां तत्वबोधिनी ॥३॥

गीता चामर - भाषायां कविवर्येण विष्णुना ।
सार्द्धैः पञ्चशतैः श्लोकै रसालङ्कारशोभनैः ॥४॥

भवतान्मोदतोषाभ्यां रसिकानामियं कृतिः ।
अनुकृत्यै चरित्रञ्च जनसेवाऽनुयायिनाम् ॥५॥

श्री विष्णुकान्ताभिधपण्डितेन
सम्पादितं काव्यविशारदेन ।
सालङ्कृतं राष्ट्रपतेश्चरित्रं
लालित्यपूर्णं रसिकाऽनुसेव्यम् ॥६॥

"अणे" इत्युपाह्वः श्री हरिसूनुर्माधवः (शर्मा)
( भूतपूर्व - भाईसरायगवर्नरजेनरलकौन्सिलसदस्यो लङ्कायां
भारतीयराजदूतो विहारस्य राज्यपालश्च )

सत्यमेव जयते

| সভাপতি— বিধান-পরিষদ্ পশ্চিম-বঙ্গ কলিকাতা। | CHAIRMAN LEGISLATIVE COUNCIL WEST BENGAL CALCUTTA | सभापति विधान-परिषद् पश्चिम-बंग कलकत्ता |
|---|---|---|

# भूमिका

ॐ श्रीः

स्वतन्त्रे भारते दुर्ग्रह-ग्रास-विमुक्ते चन्द्रमसीव, भारत-गणराष्ट्रस्य राष्ट्र-पति-पदं पदेभ्यः सर्वेभ्यो राष्ट्रजनायत्तेभ्यो ज्येष्ठं श्रेष्ठं गरिष्ठं वरिष्ठं महिष्ठञ्च ।

भारतीय-नागरिकाणाम् परमस्यात्मप्रसादस्य कारणमेतद्, यत् पदमिदं देवजुष्टं सर्वैर्मानवैरिष्टञ्च तेषां प्रेष्ठाणामन्यतमेन प्रसादमण्डितेन राजेन्द्रेणैव अन्वर्थनाम्ना तत्र भवता श्रीमता राजेन्द्रप्रसादेन प्रथममेवालङ्कृतमस्ति ।

आस्तां तावत् पौराणिकी ऐतिहासिकी च वार्ता—तात्कालिक लेखादिग्राह्ये इतिहासे तु मौर्यवंशीयस्य महाराजस्य देवानांप्रियस्य प्रियदर्शिनोऽशोकस्य प्राग, अखिले भारते एकच्छत्रसाम्राज्येन न केनापि राज्ञा जनशासकेन वा, अधिशासन-कर्मणि प्रतिष्ठितेन भूतम् ।

अशोकस्यापि काले समग्रं भारतं कन्याकुमारिका-पर्यन्तं मौर्याणां छत्रच्छाया-वशत्वं न गतम्, भारतस्य दक्षिणतमस्य कश्चिद् भागः पूर्णतया मौर्य-साम्राज्यान्तर्गतो न सञ्जात इति—इतिहासविद्भिर्मन्यते ।

ऐस्लामिक-मोगलसाम्राज्यस्य चरम प्रसार-काले औरङ्गजेबभूपतेः समयेऽपि अनुरूपाऽवस्थाऽऽसीत् ।

इतिहासस्य विवर्तनेन, विदेशागतैराङ्गलजातीयैरेव शासकैः प्रथममासमुद्र-हिमाचलमखिलं भारतमेकस्यैव शासन-तन्त्राधीनं कृतम् ।

अनेनोपायेन पूर्णतां गतं भारतराष्ट्रं भारतीयानां स्वायत्तीभूतम् ।

बहुशतवर्षानन्तरं पाकिस्तान-वर्जं भारतं, जनगणमनोऽधिनायकेन भारत-भाग्यविधात्रा भारतीयजनानाम् प्रियस्य, आशया आस्थया आदरेण च ऐकमत्येन

नागरिकवर्गैर्धृतस्य, वरणीयस्य, सेवा-विजित-जनचित्तस्य च श्रीमद्राजेन्द्रप्रसाद-स्य करेभ्यः समर्पितम्।

महिमानम् एतस्या परिस्थितेः, सुदूरप्रसारिणीञ्चास्याः प्रवृत्तिं को वर्णयितुं समर्थः।

त्रैलोक्यवन्द्यै र्नेतृभिः स्वीकृत-कारावासादिनिग्रहैः स्वजीवन-रूपायित-त्यागा-दर्शैः प्रदर्शित-जनकल्याणसत्याग्रहैः कर्मचन्द्रात्मज-महात्म-श्रीमोहनदासगन्धि-श्चपिकल्प-देशित-पथानुसारिभिर्भारतस्य स्वातन्त्र्यं भारतवासिभ्यः प्रापितं, श्रीमद्-राजेन्द्रप्रसादस्तेषामस्ति प्रवरोऽभिनेता, सर्वेषाम्पुरतश्चासौ वर्त्तते।

भारतीयानां समक्षं तत्रभवतश्चरित्रं महदवदानमेव, तस्यालोचनं पठनं पाठनं श्रवणं श्रावणञ्च सदैव जनहिताय जनकल्याणविवर्धनाय च भवितुमर्हति।

महाभागस्यास्य चरितं स्वात्मनैव प्रणीतमासीद्—हिन्दीभाषायां, तस्य च सद्ग्रन्थस्य कतिपये अनुवादाः विभिन्नभाषासु कृताः तस्य लोक-प्रियतामेव प्रकटयन्ति।

हिन्दीवङ्गभाषाऽऽङ्गलभाषादिषु च ये रुचिं दधते, तेभ्यः पुण्यश्लोकस्यास्य चरित-कथा सहज-लभ्या।

परन्तु सन्ति अधुनाऽपि भारते वर्षे बहवो गीर्वाणगिरः सेवकाः, पण्डिता विबुधा अनूचानाः, आप्त-प्रवेशाश्छात्राश्च, येषां कृते देवभाषामयं राजेन्द्रायणं हृद्यं मनोहारि हितकारि च भविता।

न केवलं तेषां, परञ्च अन्येषामपि संस्कृत-प्रेम्णां प्रीत्यर्थम्, अवगाहनार्थञ्च, पण्डितप्रवरैः पाटलिपुत्र महानगरी-वास्तव्यैः ज्योतिर्विद्या-पारङ्गतैः श्रीमद्भिः 'झा' यद्वा 'अध्यापक' इति कौलिकोपाधिमद्भिर्मैथिलैर्विष्णुकान्त शर्मभिः, सुगमया प्राञ्जलया विविधच्छन्दोबद्धया प्रसादगुणोपेतया च देवभाषया स्वान्तः सुखायैव मानससरोवर इव "राष्ट्रपतिराजेन्द्रवंशप्रशस्तिः" नामा एष नातिदीर्घो ग्रन्थः प्रस्तुतः।

ग्रन्थेऽस्मिन् न केवलं राष्ट्रपतेर्जीवन-कथा सम्यक् पर्यालोचिताऽस्ति, परन्तु वंशस्यास्य गुरु-बन्धु-कुटुम्बात्मीय-मित्रजनानाञ्च परिचयोऽत्र प्रदत्तः।

एवञ्च भारतस्य साम्प्रतिकमितिहासमपि स्वतन्त्रताप्राप्तये अन्येषामपि नेतृणां कृतिश्च यथावश्यकं प्रकाशिता।

श्रीमद्राजेन्द्रप्रसादस्यानुरागिभ्यः तत्प्रीतिधन्येभ्यश्चायं जनो लघिष्ठाना-मन्यतमो ग्रन्थकारेण श्रीमद् विष्णुकान्त शर्मणा अनुरुद्धः, अवसरमिमं शुभं मत्वा,

असौ भूमिकारूपेण शब्दौ द्वावुपरि लिखितावाश्रित्य सर्वान् सुगुण-विलासान् संस्कृत-रसिकान् सुजनचरित्रामोदिनश्च आह्वयति यत्ते, एकाधारेण सुवीर-सुकवि-कृती अमृतरसमिवास्वाद्य तृप्तिमनुपमां लभन्ताम् ।

भारताधिशासन-परिचालितेषु तथा चेतरेषु सर्वेषु, महाविद्यालयेषु, विश्वविद्यालयेषु च, संस्कृत-पाठशालासु, संस्कृतानुरागिणां संस्थासु च ये ग्रंथालयाः सन्ति तेषु संस्कृतकाव्यग्रन्थस्यास्य सन्निवेशो यथा स्यात् तथा संस्कृतप्रेमभिः कर्त्तव्यमिति शम् ।

इति निवेदनमिदं

*काश्यपस्य श्री सुनीतिकुमारदेवशर्म चट्टोपाध्यायस्य*

पश्चिम-बंग-विधान-परिषत् सभापतेः

*वैशाखस्य शुक्लप्रतिपदि संवत् २०१५,*

*अप्रिल मासस्य विंश दिवसे खृष्टाब्दाः १९५८,*

*विहार-राज्ये पाटलिपुत्रनगर्याम् ।*

CHIEF-MINISTER,
BIHAR.



PATNA.
*14th June, 1958*

पण्डित-प्रवर श्री विष्णुकान्त झा जी लिखित "राष्ट्रपतिराजेन्द्रवंशप्रशस्ति" नामक पुस्तक प्रकाशन के क्रम में देखने को मिली। पण्डितजी ज्योतिष-शास्त्र के प्रकाण्ड पण्डित तथा संस्कृत के ख्याति-प्राप्त विद्वान हैं। आपसे मेरा बहुत निकट का परिचय रहा है। आपने इस पुस्तक की रचना पद्य-बद्ध संस्कृत में की है और जैसा इसके नाम से विदित होता है, इसमें पूज्य राजेन्द्र बाबू का जीवन-चरित सुन्दर ढंग से दिया गया है।

प्रत्यक्षतः पुस्तक की सबसे बड़ी विशेषता यह है कि इसमें राजेन्द्र बाबू जैसे महापुरुष की जीवनी तथा उनके पूर्वजों का परिचय मिलता है। किन्तु यह पुस्तक एक दूसरी दृष्टि से भी महत्त्वपूर्ण है। इसमें राजेन्द्र बाबू के जीवन-चरित को देते हुए विद्वान लेखक ने बड़ी कुशलता से स्वतंत्रता-संग्राम तथा बंधन-मुक्ति के पश्चात् देश में चलनेवाली राष्ट्र-निर्माण की विभिन्न योजनाओं का भी उल्लेख किया है। इस तरह स्पष्टतः यह पुस्तक उन जीवन-चरितों से भिन्न और अधिक उपयोगी है, जिनमें केवल किसी व्यक्तिविशेष तथा उनके स्वजन-परिजनों का परिचय मात्र रहता है।

संस्कृत भाषा में इस तरह की पुस्तक लिखकर पण्डितजी ने अवश्य ही संस्कृत भाषा एवं समाज दोनों की अमूल्य सेवा की है। मैं उन्हें इस रचना के लिए बधाई देता हूँ। आशा है, यह पुस्तक संस्कृत-साहित्य के लिए गौरव सिद्ध होगी।

श्रीकृष्ण सिंह
१५-६-५८
(मुख्यमन्त्री, बिहार)

MINISTER of EDUCATION
BIHAR.



PATNA.
*16th June, 1958*

राष्ट्रपतिः श्रीराजेन्द्रप्रसादः स्वगुण-गौरवेणाद्य भारतीयानधिकृत्य तिष्ठति। वैदुष्यमस्य विदुषाञ्चेतश्चमत्करोति। कर्मकौशलमपि कुशलानामग्रे पदं निदधाति।

बाल्यादेवास्य पुरुष-पुङ्गवस्य वितते हृदि देशभक्तिर्दृश्यते। स्वातन्त्र्य-संग्रामे सर्वस्वम्परित्यज्य कायेन मनसा वाचा सदैवायं बद्ध-परिकरः पुरः प्रतिष्ठितः सेनानीरासीत्। गुणानुबद्ध-हृदयैर्भारतीयैरपि एनं देशरत्नं निश्चित्य भारतीयगणराज्यस्य प्रथमराष्ट्रपति-पदेनायमेव सत्कृतः।

अस्यैव महापुरुषस्य चरितानुकीर्त्तनं ज्योतिर्विदा श्रीविष्णुकान्त झा शर्मणा सुललितैश्छन्दोभिर्विहितमित्यालोक्य नितरामाप्यायितोऽहम्। महापुरुषाणां पवित्रं चरित्रं सदैव लोकोपकारकमिति पुरा पुरातनैरपि कविभिर्बहुशो निबद्धम्। एषा प्राचीनतमा भारतीया परम्पराऽद्यत्वेऽपि जीवतीति भृशमानन्दहेतुः।

काव्यमदः समादृत्य सर्वैरेव गीर्वाण-वाणी-विशारदैः सत्कविरयं सत्करिष्यते इत्याकांक्षति—

*श्री गङ्गानन्द सिंहः*
( शिक्षामन्त्री, बिहारस्य )

CHIEF MINISTER
UTTAR PRADESH.

लखनऊ
मार्च ११, १९५८

प्रिय महोदय !

श्री राष्ट्रपतमहोदयानां चतुःशतश्लोकात्मिका ( इदानीं पञ्चपञ्चाशदुत्तर-पञ्चशतात्मिका ) या प्रशस्तिर्भवता प्रस्तूयते, तस्याः सूचना समाचारपत्रे भवतः चीठिक्या च प्राप्ता। साधुवादार्होऽयं विचारः। पात्रमहत्तानुरूपो निबन्धोऽयं भविष्यति, इति मे आशा वर्त्तते।

भवतः
*सम्पूर्णानन्दः*
( मुख्य मन्त्री,
उत्तर प्रदेशस्य )

*पं० विष्णुकान्त झा*
ज्यौतिषाचार्यः
चौहट्टा
बाँकीपुर, पटना

सत्यमेव-जयते

BIHAR GOVERNOR'S CAMP,
( राँची, ८ जुलाई, १९५८ ),

पं० श्री विष्णुकान्त झा द्वारा शुद्ध प्राचीन संस्कृत भाषा में रचित "राष्ट्रपति-राजेन्द्रप्रशस्ति" पुस्तक को देश तथा विदेश के विद्वानों के सामने उचित सम्मान प्राप्त होगा, ऐसा मेरा दृढ़ विश्वास है। पं० श्री विष्णुकान्त झाजी ने राष्ट्रपतिजी के जीवन-चरित्र के साथ उन सब व्यक्तियों और उनके कार्य-कलापों को छंद-बद्ध किया है, जिन्होंने आधुनिक भारत को संसार के सामने गौरवमय बनाया है और इसके लिए यह देश उनका ऋणी है। संस्कृत भाषा में, जिसमें भारतीय जीवन और संस्कृति की सारी अच्छाइयाँ निहित हैं, राष्ट्रपतिजी तथा उनके महान् सहकर्मियों के कार्यों का वर्णन कर उन्हें अमर बना दिया गया है। मैं पं० श्रीविष्णुकान्त झा के इस महान् प्रयास के लिए हार्दिक बधाई देता हूँ।

ज़ाकिर हुसेन.
( राज्यपाल, बिहार )

|| श्रीः ||

## स्वकीयं प्राक्कथनम्-

आसीद् बिहारसंस्कृतसमितेः पदवीदानोत्सवसमारोहः। तत्र लोकप्रियं विद्यागुणनिधिं श्रीराजेन्द्रप्रसादमहोदयं 'विद्यामार्त्तण्ड' नामकेन महता विद्यासम्मानोपाधिना समलङ्कर्तुं महतां पण्डितानां संस्कृतपरिषत्सदस्यानां सर्वेषामधिकारिजनानाञ्च महान् समुल्लासः समजनि।

तदवसरे मानपत्रं श्रीमद्राष्ट्रपतये समर्पयितुं देववाण्यां कानिचित् तत्प्रशस्तिपद्यानि मया विरचितानि, तानि पदवीदानोत्सवावसरे समुपयोगितामासादितानि। मत्तः समुद्गीर्यमाणानि प्रशस्तिपद्यानि निशम्य तत्रोपविष्टानां महतां विदुषां राज्यशासकप्रभृतीनाञ्च चेतांसि परमं प्रमोदं समुपागतानि। तत आरम्य निजराष्ट्रपतेः कृते काव्यरचनार्थं मे रुचिः प्रथमं प्रादुरभूत्।

तदनन्तरं १९५५ वर्षस्य जनवरीमासे देहलीस्थिते राष्ट्रपतिभवने श्रीराजेन्द्र बाबू महोदयस्य स्वस्तिमत्याः पौत्र्याः शुभविवाहोत्सवेऽह्नि राष्ट्रपतिना सहोपविष्टेन मया तदग्रे कानिचित् प्राक् स्वरचितपद्यानि श्रावितानि। तदानीमेव श्रीमद्देशरत्नमहोदयमुखादनायासं वचो निरसृतं यत् "संस्कृतपरिषदि भवत्पठिते प्रशस्तिपत्रे मत्पूज्यस्य पितामहस्य पितुश्च चर्चा समासीत्; किन्तु पितृसमश्रद्धेयस्य स्नेहागारस्य चिरस्मरणीयस्य मद् भ्रातुःकृते न कोऽप्युल्लेखो भवता कृत" इति–स्वीयां त्रुटिं तत्र मनसाऽहं व्यचिन्तयम्।

एवं प्रतापिनो देशरत्नस्य भ्रातृस्नेहमवगत्य स्वान्तं मे प्रासीदत्।

तदानीं मे हृदि विचारोऽजायत यदेतस्य पुण्यश्लोकस्य राष्ट्रपतेः श्रद्धेयस्वर्गतभ्रातुः सम्बन्धे केचित् श्लोका मया विरचनीया इति विचिन्त्य "सत्वरमवश्यं लिखिष्यामि दर्शयिष्यामि च श्रीमन्तम्" इत्यहमवोचम्।

तस्यां रात्रावेव सार्द्धैकहोरावादनमारभ्य राष्ट्रपतिभवने शय्यामधिगतोऽपि निद्रां परिहरन् क्रियन्ति पद्यानि संस्कृतेनाहं व्यरचयम्—श्रीदेशरत्नज्येष्ठभ्रातुः स्वनामधन्यस्य स्व० बाबू महेन्द्रप्रसादमहोदयस्य सम्बन्धे। ततः परेद्युर्निशायां तानि स्वरचितसंस्कृतपद्यानि श्रीमन्तं देशरत्नमश्रावयम्। प्रियभ्रातुःसम्बन्धे प्रशस्तिकाव्यं श्रुत्वा श्रीमद्राष्ट्रपतेराकृतौ पुलकोद्गममभिव्यक्तममन्दमानन्दवर्षणं दर्शं दर्शं पुनरपि मन्मनसि नव्या भव्या भावना हठात् समजायत, यदेतस्य देशहेतुक-

कृतप्रयत्नस्य महामानसस्याखिललोकरञ्जकस्य श्री राजेन्द्रप्रसादमहाभागस्य सम्बन्धे सविस्तरं. विविधच्छन्दोभिः प्रशस्तिकाव्यग्रन्थो मया लेखनीयः। यतो हि प्राञ्चो राजर्षयः सम्राजः संस्कृत-वाङ्मयैः काव्यैर्वर्णिताः सन्ति बहवः; किन्तु आधुनिक युगस्य राजर्षिः श्री राजेन्द्रप्रसादः सुरभारत्याऽद्यावधि न केनापि वर्णितः काव्येनेति विविच्य विद्या-विनय-धी-धर्म-सम्पन्ने श्री राजेन्द्रप्रसादे मदीया या श्रद्धा वरीवर्त्ति तया श्रद्धया प्रेरितः सन्नहं स्वान्तःसुखाय पुस्तकं निर्मातुं काव्यरचनायां प्रवृत्तोऽभवम्। तदर्थं प्रतिपाद्यविषयं जिज्ञासमानो देशरत्नविलिखितामात्मकथां दिदृक्षुरासम्। संयोगेन तदवसरे स्वकन्याया विवाहहेतुकजन्मकुण्डलीमेलापक गणनाविचारं विधापयितुं श्री राजेन्द्रप्रसादमहोदयात्मजन्मा चिरञ्जीवी श्रीमृत्युञ्जय-प्रसादशुभोदयः पटनाविश्वविद्यालयीयहिन्दीविभागाध्यक्षेण योग्यतमेन एम० ए० साहित्याचार्य पदवीधारिणा डॉ० श्री विश्वनाथप्रसादमहोदयेन सह ममान्तिकं समगात्।

तत्पूर्वं पुस्तकसम्बन्धे यानि विविधच्छन्दोमयानि पद्यानि निर्मितान्यासन् तानि तयोरग्रे मया पठितानि, आत्मकथापुस्तकं मृग्यते तदप्यभिहितञ्च। विदुषा डॉ० श्रीविश्वनाथप्रसादेनाभ्यधायि पुस्तकमात्मकथां दातुन्तदनुसारं तेन प्रेषितञ्च तत्पुस्तकम्। तत आत्मकथापुस्तकादेव बहवो वर्ण्यविषया अत्र संगृहीताः। कतिचन विषयान् स्वनामधन्यस्य चरित्रनायकस्य सम्बन्धे प्रायः सर्वे विदाङ्कुर्वन्त्येव। अनेकं वृत्तं कर्णाकर्णिपरम्पराऽऽगतं यच्छ्रुति-पथमाविष्टम्भे तदपि वर्ण्यविषये विनिवेशितं विद्यते।

वस्तुतस्तु शीतलशान्तद्युति-धृतस्य प्रियदर्शनस्य जगन्मोदकस्य पीयूषपिण्डस्य ताराधिपतेश्चन्द्रस्य परिचयो जीवधारिणां केषां नो वरीवर्त्ति तथैवेदानीन्तनस्य सुशान्तस्य सर्वलोकहितैषिणो भारतलोकेन्द्रस्य राजर्षेश्चरित्रनायकस्य राष्ट्रपते-र्लोकाकर्षकं व्यापकं जीवनवृत्तं भारतीयाः के नहि जानन्ति।

इत्थं चरित्रनायके मम निष्कामभावनया संलग्नया परमश्रद्धया समेतस्य वर्ण्यस्येतिहासज्ञानार्थसिद्धिर्मे करामलकवत् प्रत्यक्षायमाणा प्रत्यभात्।

अथ च काव्यरचनायां प्रधानं हेतुरयमेव यदिह श्रीजगदम्बाऽनुकम्पाशरणम्। अतएव धन्यधन्यः सपरिवारोऽसौ चरित्रनायको 'विद्यामार्त्तण्डः' श्रीराजेन्द्रप्रसादो मम काव्यरचनायां संग्रथितो व्यभासत।

१९५५ वर्षस्य जनवरीमासमारभ्य ग्रन्थं रचयितुं प्रारब्धवान्। मध्ये शरीरक्लेशादि बहूनि विघ्नान्युपगतानि मे। १९५६ वर्षस्य फरवरी मासे प्रादुलि-

पुत्रस्थराजभवने राष्ट्रपतिना सह साक्षात्कारसमये स्वरचितकाव्यं श्रावितवानहं श्रीमन्तं चरित्रनायकम्। मत्प्रतिपादितं काव्यं श्रावंश्रावं संस्कृतानुरागी संस्कृति-संरक्षकः स्वतंत्रभारतराष्ट्रनायको मुदाऽवोचत्—"सत्यं सत्यं वचो व्यलिखद् भवान्।" एवं व्याह्रियमाणं प्रसन्नाननन्तमपश्यम्। तदानीमपि मे ध्यानमाकृष्टं यत् सत्यविषये एव राष्ट्रेशस्य तीव्रा निष्ठा स्वभावजा जागर्त्ति। ततःपरं १६५७ वर्षे जूनमासे पाटलिपुत्रस्थराजभवने राष्ट्रपतिना साक्षात्कारो मे जातः। तत्रान्येषां महतां देशनेतॄणां सम्बन्धादिचर्चा, तेषां चरित्रचित्रणञ्च काव्येन यन्मयाऽकारि तत्प्रसङ्गे तानि कियन्तिचित् पद्यानि श्रावितानि। तदाकर्ण्य लोकरत्नमिव देशरत्नं समुक्तवान् यत् "सर्वेषां जनानामाशीर्वादानिच्छामि।" इत्यपि तद्वचः श्रुत्वा मच्चेतसि प्रकृष्टा सद्भावनाऽजागरद् यदहो! कीदृशमास्तिक्यं राष्ट्रपतेर्हृदि विराजति।

ग्रन्थारम्भकाले पुण्यश्लोकस्यैतादृशस्य देशहेतुकबद्धादरस्य सपरिवारस्योद्गीयमानस्य राष्ट्राधीशस्य गीर्वाणभाषया जीवनवृत्तसंग्रथने विपुलं काठिन्यं दुस्साध्यं कार्यञ्चानुभवन् सरस्वत्या इव भासमानस्य महाकविकालिदासस्योक्तं पद्यं स्मारं स्मारं तदेव किञ्चित् परिवर्त्यात्रोद्धरामि—

"क्व श्रीराष्ट्रपतेर्वंशः क्व चाल्पविषयामतिः।"......अथवा

"सोऽहमाजन्मशुद्धस्य देशस्वातन्त्र्यकारिणः।
सद्भारतक्षितीशस्य जनचैतन्यसंभृतः॥"...इति

अथापि वामनस्येवोद्वाहोः प्रांशुलभ्ये फले सश्रद्धस्य मे चेतः काव्यं निर्मातुं संलग्नम्। यद्यपि प्रस्तावितस्य सपरिवारस्य राष्ट्रेशस्य जीवनवृत्तानि गणनासमतीतानि लिखितुमशक्यानि सन्ति, अतः समग्रं तदीयमितिहासात्मकमाद्योपान्तं जीवनवृत्तं वर्णयितुं नाहं समर्थोऽभवम् तथापि यावद् विधातुमपारयम् तदुपगम्य इहैतद् वक्तव्यं समुचितं भवेद् यत् केवलं महाशक्त्याः परामबायाः कृपया तथा चरित्रनायकस्य राष्ट्रपतेः सत्त्याग-देशसमाज-कल्याणसम्पादनादिसत्पुण्यैस्तदीय-विशिष्टवंशमहापुरुषाणां कृते सुरभारतीपद्यरूपकैः कुसुमनिचयैः स्वमनोऽनुकूलं माल्यं ग्रथितुं सन्निरतोऽभूवम्! प्रस्तुतो ग्रन्थः प्रशस्तिकाव्यरूपकस्तस्माद् "राष्ट्रपति-राजेन्द्रवंशप्रशस्ति"—रित्यभिधानेन पञ्चपञ्चाशदुत्तरपञ्चशतात्मकैः श्लोकैस्तदितरैः प्रस्तावनासम्मत्यादिभिः सह प्राकाश्यम्प्रसिद्धिञ्चोपनयति।

पुस्तकेऽस्मिन् न केवलं चरित्रनायकस्य राष्ट्रपतेस्तद्वंशजानां वा काव्येन वर्णनं वरीवर्त्यपितु समग्रभारतस्य राष्ट्रपतित्वसम्बधादेतद्भारतस्य स्वातन्त्र्याप्त्यै

बद्ध-परिकराणां देशहेतुककारागारयातनादिदुर्भोगानुभविनां स्वाधीनत्वकृते त्यक्त-सर्वस्वानां देशप्रेमवतामसमस्तानामादर्शपुरुषाणां श्रीमद् राजेन्द्र बाबू महोदय-बुद्धिशीलचारित्र्यादिप्रशंसकानां कतिपयदेशनेतॄणां स्वल्पातिस्वल्परूपेण चर्चा-श्छन्दोभिर्मया कृतास्तथा चरित्रनायकस्य राष्ट्रपतित्वशुभावसरे राष्ट्रोत्थान-हेतुकानि कतिचन कार्याणि यानि सम्पन्नानि, सम्पद्यमानानि वा भवन्ति तेषान्तेषा-मसमग्राणामिह मत्तः प्रस्तुतवर्णनानि संस्कृतप्रेम्णां पाठकानामवगमाय पुस्तके-ऽस्मिन्मञ्जुलतामादधति ।

ग्रन्थपूर्त्तौ सत्यां जगति तीर्थप्रसिद्धश्रीवैद्यनाथधामस्थ श्रीवैद्यनाथ-संस्कृतविद्यालयप्रधानाध्यापकेन विद्यावयोवृद्धेन दार्शनिकेन शाब्दिकेन च 'प्रधानाचार्य' पदवीविभूषितेन गुरुणा पण्डितश्रीसदानन्द"झा"शर्मणाऽऽ-द्यन्तं स्वदृष्टिपातेन पवित्रीकृतोऽयम् । ततो ज्यौतिषजगति कीर्त्तिलतिकापताकस्य दुर्गम्यानां ज्यौतिष-साहित्य-धर्मशास्त्र-ग्रन्थानां टीकाटिप्पण्यादिनिर्मातुस्त्रिस्कन्ध-ज्यौतिषशास्त्रपारावारपारीणस्य महर्षिसमानस्य पण्डिताग्रगणनीयगौरवस्य गुरोः स्वर्गतस्य गङ्गाधरमिश्रशर्मणः प्रियात्मजन्मा व्याकरणसाहित्याचार्यः मुजफ्फरपुर-स्थ लंगट सिंह महाविद्यालयस्य एम्० ए० कक्षाविद्यार्थी श्री काशीनाथ मिश्रो-मल्लिखित पुस्तकमवलोक्य तदनुसारं प्रेसकप्पिकां मुद्रणार्थं सुस्पष्टाक्षरैरलिखत् ।

तदनन्तरं देशोन्नतिहेतुकसमुद्यतमानसेन राष्ट्रपितुर्महात्मनो गान्धिनो-मतानुयायिना विविधविशिष्टग्रन्थनिर्मापकेन सुहृद्वरेण प्राच्यावाच्यविद्यानुरागिणा विद्यावारिधिनामकोपाधिविभूषितेन महामहिम्ना विहारराज्यपालेन विद्वद्वर्यस्वर्गत-पण्डितरामचन्द्रदिवाकरशर्मतनूजन्मना श्रीमता रंगनाथदिवाकरमहोदयेन सुन्दर-संस्कृतभाषया विलक्षणा 'आमुखम्' इति शीर्षिका स्वकीया शुभसम्मतिः १० मई, १९५७ दिने प्रेम्णा विलिखिता ।

ततः परं समुचितेन न्यायेन लोकहितसाधने शासने च सर्वथा समर्थः सत्य-चरित्रन्यायनिष्ठः स्वाध्यायप्रतिष्ठः पौरस्त्यपाश्चात्यविविधविद्यानुरक्तो महामतिज्ञः संस्कृतानुरागी पाटलिपुत्रस्थोच्चन्यायालयस्य माननीयः प्रधानन्यायाधीशः श्री वी० रामस्वामी (I. C. S.) महानुभावः सुविशदभावेन श्लाघ्यं संस्कृतसंगिरा प्रस्तावनेति-शीर्षकं निजं मतं पुस्तकस्यास्य कृते ४ जून, १९५७ दिवसे कृपया समलिखत् ।

अथ च, महर्षिलोकमान्यपण्डितबालगंगाधरतिलकमहाशयानुवर्ती देश-हितोत्सुकः ख्यातनामा विविधशास्त्रपारङ्गतो विश्रुतवेदज्ञो महामतिरार्यसंस्कृति-संरक्षकः संस्कृतैक-निष्ठो विद्यावयोवृद्धः पञ्चदेवोपासको लोकोत्तरचरितो विद्यामा-

त्तं गडोपाधिविभूषितः परमश्रद्धेयः "अणे" इत्युपाहूवः पण्डितप्रवरश्रीहरिसूनुः स्वनामधन्यः श्री माधवशर्मा ( भाइसराय गवर्नर जेनरल कौन्सिल मेंबर पदप्राप्तो लंकायां लब्ध-भारतीयराजदूत-पदोऽवसरप्राप्तविहारराज्यपालपदश्च ) संक्षेपेण सारार्थविलासगर्भां सुन्दरसरलसंस्कृतपद्यमयीं स्वशुभां सम्मतिं स्वकरकमलेन लिखित्वा मत्सकाशं प्रेषितवान् ।

तदनन्तरं परम योग्यतमेन विद्याविनयसम्पन्नेन महामनस्विना भारतसर्व-कार-कृत संस्कृतायोगस्य भूतपूर्वाध्यक्षेण विविधभाषाविज्ञेन एम० ए० (कलिकाता), डी० लिट्० ( लन्दन ), एफ० ए० एस०-पद्मविभूषण-भाषाचार्य-साहित्यवाचस्पति-प्रभृत्युपाधिविभूषितेन अनेकग्रन्थसम्पादकेन सुहृदयेन पश्चिमवंग-विधानपरिषद-ध्यक्षेण श्रीमता डॉ० सुनीतिकुमार चट्टोपाध्यायमहोदयेन पाण्डित्योद्भासिता सुललिता संस्कृतवाङ्मयी बुधजनमोदावहा स्वकरकमलाङ्किता स्वकीया सम्मति-भूमिकारूपा पुस्तकेऽस्मिन् प्रकाशनाय मत् सविधे सम्प्रेषिता ।

अथच,स्वाधीनतासंग्राम सेनान्या प्रात्यहिकस्वाध्यायपटिष्ठेन व्याख्यातृवरिष्ठेन विद्यानहिष्ठेन प्रशस्तप्रशासकेन विहारराज्यमुख्यमन्त्रिणा सम्मान्येन डॉक्टरे-त्युपाधिविभूषितेन श्रीमता श्रीकृष्ण सिंह महानुभावेन विलक्षणया प्रतिपादनशैल्या सकलजनबोधगम्यया सुललितया हिन्दीसंगिरा वैदुष्यमञ्जुलतोद्भासिता विशिष्ट-जनचेतश्चमत्कारिणी सद्भावपूर्णा निजा सम्मतिः पुस्तकस्यास्य कृते विलिखिता ।

एवमेव, स्वातन्त्र्यहेतुककृतप्रयत्नेन सत्त्यागशीलेन कुलक्रमागतविद्याशीलचारि-त्र्यवता समुदात्तमानसेन मैथिलब्राह्मणकुलकमलेन विविधविद्याविज्ञेन विहारराज्य-शिक्षामन्त्रिणा श्रीमता कुमार गङ्गानन्द सिंह शर्ममहोदयेन पण्डितजनमोदा-वहोऽतिसुन्दरभावसंवलितः सुसरलसंस्कृतवाङ्मयललितः स्वविचारः पुस्तके-ऽस्मिन् प्रकाशनाय सम्प्रेषितः ।

एवञ्च,ख्यातकांग्रेसकर्माऽऽनेकग्रन्थप्रणेता गणितज्यौतिषतत्त्वविद् विद्याप्रेमा-ऽऽर्यसंस्कृतिसंस्कृतसंरक्षको डॉक्टरः श्री सम्पूर्णानन्द जी महाशयः ( उत्तर प्रदेशमुख्य-मन्त्री ) संस्कृतभाषानिबद्धां स्वशुभाशंसां प्राहिणोत् ।

तदनन्तरं दिल्लीस्थ "जामेआ मिल्लिया" इत्यस्य भूतपूर्वप्राचार्यो महात्मगांधिविनिर्मित बुनियादीतालिमी संघस्य भूतपूर्वाध्यक्षः अलीगढ़ विश्व-विद्यालयस्य लब्धोपकुलपतिपदो गान्धिमतानुयायी विषयद्वये पी० एच० डी० ( जर्मनी ) प्रशास्तव्याख्याता विख्यातविद्यो महामहिम-विहारराज्यपालः डा० श्री ज़ाकिर हुसेन साहब महोदयः सुललितया सद्भाव-पूर्णया विलक्षणया हिन्दीभाषयाऽ-नुस्यूतां स्वीयां शुभसम्मतिम्पुस्तकेऽस्मिन् प्रकाशनाय सम्प्रेषितवान् ।

अपिच, ग्रन्थस्यास्य सम्बन्धे सूर्योदय-नाम्नि संस्कृतपत्रे ; आर्यावर्त, विश्वमित्र, नवराष्ट्र, प्रदीप, आज, हिन्दुस्तानादिहिन्दी-पत्रेषु ; युगान्तर प्रभृति वंगभाषापत्रेषु तथा सर्चलाइट, इण्डियननेशन, स्टेट्समैन, हिन्दुस्तान स्टैण्डर्ड, हिन्दुस्तानटाइम्साद्यांग्लभाषापत्रेषु सुहृदया गुणैकपक्षपातिनः सज्जना मान्याः पत्रसम्पादकाः समाचारसम्पादकाश्च बहवो महानुभावाः स्वीयंस्वीयं सुन्दराभिप्राय-विभासमानं साधु समाचारं सहर्षं प्रकाशितवन्तः ।

इत्थं प्राप्तोपकरणसम्भारः अहं स्वद्रव्येण विपणितः क्रीतकर्गजादिः, खजांची रोड ( पाटलिपुत्र ) स्थ ज्ञानपीठाध्यक्ष साहित्यानुरागिपरमसज्जनपण्डित श्रीमदन-मोहन पाण्डेय महोदय द्वारा "ज्ञानपीठ" नाम्नि प्रशस्त मुद्रणालये एकशताधिक-द्विसहस्र ( २१०० ) परिमितानि पुस्तकानि स्वव्ययेनाहं मुद्रापयित्वा पुस्तकस्यास्य पुनर्मुद्रण-प्रकाशनादि सर्वानधिकारान् स्वायत्तीकृत्याधुना प्रकाशयामि ।

अस्य मुद्रण-समये दरभंगानगरप्रतिवेशि 'चतरिया' ग्राम-वास्तव्यः पण्डितप्रवरस्वर्गतठक्कुरोपनामकसदानन्द शर्मसूनुः साहित्याचार्य "उग्रवंश-प्रशस्ति" नामक पुस्तक-प्रणेता पण्डित श्री उपेन्द्र ठक्कुर "मोहनः" सपरिश्रम-माद्यन्तं प्रूफादिसंशोधनकार्यं कृतवान् तथा च न केवलं भारते एव अपितु जापानादि देशेष्वपि लब्धप्रतिष्ठो विहारराज्यशिल्पकलाऽनुसन्धानोद्योगविभाग-निर्देशको विख्यातनामा कलाकारः सुहृदयः श्री उपेन्द्र महारथी महोदयः स्वकरकम-लेन कलापूर्णमावरणपृष्ठचित्रं प्रेम्णा विनिर्मितवान् ।

इत्यर्थं प्रागुक्तेभ्यः स्वकृतिधन्येभ्यः समस्तमहानुभावेभ्यः स्वकृतज्ञतां परिज्ञापयँस्तेभ्यो धन्यवादान् साधुवादांश्च समर्पयन् सज्जनानां पुरतः सादरं विनिवेदये च यन्मया रचितमिदं पुस्तकं संस्कृतानुरागिणोऽन्ये सत्पुरुषा वा यदि पठिष्यन्ति तदा स्वपरिश्रमं सफलमहमवगमिष्यामि ।

अत्र मनुजसहजबुद्धिगतदोषेण कष्टकजन्यत्रुटिवशेन च यदशुद्धमनुचितं वा भवेत् तत्—"गच्छतः स्खलनं क्वापि भवत्येव प्रमादतः ।
हसन्ति दुर्जनास्तत्र समादधति सज्जनाः ॥

इति स्मरद्भिर्गुणैकपक्षपातिभिर्विद्वद्भिरन्यैः सज्जनैश्च कृपया क्षन्तव्यम् ।

अथ यस्याः कृपालवलेशेन ममेप्सितं काव्यमिदं पूर्त्तिमवाप्य पुस्तकरूपेण परिणतिं समाक्रान्तस्यै पराम्बायै निखिललोकमहेश्वर्यै महाशक्त्यै भगवत्यै श्री दक्षिणकालिकायै परमेश्वर्यै भक्त्या हृदा सादरं भूयोभूयःप्रणामाँश्च कुर्वन् विरमामि

इतिशम्

विनीतस्य

***श्रीविष्णुकान्त 'झा' शर्मणः***

१४-७-५८

## राष्ट्रपतिराजेन्द्रवंशप्रशस्ति—

### विषयानुक्रमणिका:

* * *



—:०:—

# राष्ट्रपतिराजेन्द्रवंशप्रशस्ति-ग्रन्थे

## शुद्धिपत्रम्

| पृष्ठानि, | श्लोकाः, | पंक्तयः, | अशुद्धाः | शुद्धाः |
|---|---|---|---|---|
| १० | ६२ | ३ | सद्राजयोगोत्तमे | सद्राजयोगोत्तमे, |
| २६ | १६४ | २ | परिमोचयिष्यति | परिमोचयिष्यन् |
| २७ | १७० | २ | मशोभतासौमति | मशोभतासौ मति |
| " | १७२ | ४ | प्रीत्यादेश | प्रीत्या देश |
| २८ | १७४ | १ | रिपोर्भयकरं | रिपोर्भयकरं |
| " | १७६ | १ | मतप्रसिद्धयै | मतप्रसिद्ध्यै |
| ३१ | १९५ | ४ | कृत्य | कृत्यं |
| ३२ | १९८ | १ | शुभंशासितुं | शुभं शासितुं |
| ३६ | २२२ | २ | परतन्त्रतापहा | परतन्त्रताऽपहा |
| ३९ | २४१ | ४ | मर्कुर्वत | मकुर्वत |
| " | " | " | सिद्धिशिष्टम् | सद्धिशिष्टम् |
| ४१ | २५० | ३ | सन्मार्गं मुद्रो | सन्मार्गमुद्रो |
| ४६ | २९४ | १ | मध्यपूर्वीय देशान् | मध्यपूर्वीय-देशान् |
| ५१ | ३०८ | १ | पूर्वंभाङ्गल | पूर्वमाङ्ग्ल |
| ५५ | ३३३ | २ | तथव | तथैव |
| ५८ | ३४६ | शीर्षक | कवीन्द्र रवीन्द्रः | कवीन्द्रोरवीन्द्रः |
| ५९ | ३५० | ४ | बोस सुभास | बोससुभास |
| ६१ | ३५९ | ४ | मत्याग्रहीत् | मत्याऽग्रहीत् |
| ६४ | ३७४ | ३ | प्रतिमेण | प्रतिमेन |
| ७१ | ४१० | २ | कश्मीर राज्ये | कश्मीरराज्ये |
| " | ४११ | २ | कश्मीर राज्य | कश्मीरराज्य |
| " | ४१२ | १ | विध्वसं | विध्वंस |
| ७८ | ४४२ | १ | गार्डन नामक | गार्डन-नामक |
| ८० | ४५२ | ३ | ए० डी० सी० ति | ए० डी० सीति |
| ८१ | ४५८ | ४ | ए० डी० सी० ति | ए० डी० सीति |
| ८२ | ४६१ | २ | सर्वा॑घ | सर्वाघ |
| ८४ | ४७५ | ४ | गारः ःसन्नि | गारः सन्नि |
| ८७ | ४९४ | १ | कार्तिकेयेण | कार्तिकेयेन |
| ८९ | ५०४ | शीर्षक | परिवृत्त्या | परिवृत्या |

| पृष्ठानि, | श्लोकाः, | पंक्तयः | अशुद्धाः | शुद्धाः |
|---|---|---|---|---|
| ६४ | ५३२ | २ | व्याडि नाम | व्याडिनाम |
| " | ५३३ | शीर्षक | विद्वाँसः | विद्वांसः |
| " | ५३३ | ३ | दर्शनान्तु | दर्शनानान्तु |
| ६६, | ५४३ | १ | सर्वश्रेष्ठ | सर्वश्रेष्ठ |
| " | ५४४ | ४ | प्रसाद सद् गुण | प्रसादसद्गुण |
| ६७, | श्लोक संख्या– | | ४४५, ४४६ | ५४५, ५४६ |
| " | ५४६ | २ | यथाभवद् | यथा भवद् |

—ग्रन्थकर्तृपरिचये:—

| पृष्ठानि, | श्लोकाः, | पंक्तयः | अशुद्धाः | शुद्धाः |
|---|---|---|---|---|
| १०० | ५ | ४ | गुण | गुणै |
| १०१ | १० | १ | फलकथनममहो | फलकथनमहो |
| " | ११ | २ | कीर्ति | कीर्त्तिं |

—प्रस्तावनायाम्:—

| पृष्ठानि | पंक्तयः | अशुद्धाः | शुद्धाः |
|---|---|---|---|
| ३ | १५ | माङ्गल | माङ्गल् |
| ४ | ६ | वपश्चद् | विपश्चिद् |

—सम्मतौ:—

| | | | |
|---|---|---|---|
| ५ | ४ श्लोक | वष्णुना | विष्णुना |

—भूमिकायाम्:—

वङ्गाक्षरे:—

| | | | |
|---|---|---|---|
| ६ | | पश्छिम वङ्ग | पश्चिम-वङ्ग |
| ६ | ४ | प्रेष्ठाणां | प्रेष्ठानां |
| ६ | ७ | प्राग | प्राग् |

डा० सम्पूर्णानन्द पत्रे:—

| पत्र | पंक्ति | अशुद्धाः | शुद्धाः |
|---|---|---|---|
| १० | २ | राष्ट्रपत | राष्ट्रपति |

स्वकीयप्राक्कथने

| | | | |
|---|---|---|---|
| १२ | ६ | पदवीदानोत्सवासरे | पदवीदानोत्सवावसरे |
| १७ | १३ | उग्रवश | उग्रवंश |

—::०::—

| पृष्ठानि | पंक्तयः | अशुद्धाः | शुद्धाः |
|---|---|---|---|
| १२ | १६ | लिखि | लेखि |
| ,, | २२ | परिहृन् | परिहरन् |
| १३ | ३० | ब न बघ्नान्युपगतानि | बह्वो विघ्ना उपगता |
| १४ | ४ | व्याह्रियमाणं | व्याहरन्तम् |
| १४ | १० | अजागरत् | अजागरीत् |
| १४ | २० | लिखितु | लेखितु |
| १७ | २३ | कष्टक | कण्टक |

मूलग्रन्थे

| पृष्ठानि | श्लोकाः | पंक्तयः | अशुद्धाः | शुद्धाः |
|---|---|---|---|---|
| ८ | ४६ | २ | वाधत | बाधत |
| १२ | ७८ | ४ | समभ्नत् | समाभ्नत् |
| १५ | ९२ | १ | विंशन्मिता | विंश-मिता |
| ,, | ९३ | १ | मजागरत् | मजागरीत् |
| १६ | द्वितीयशीर्षके | | बी० ए० | बी० ए० |
| १७ | १०४ | २ | मुपार्ज्जित्य | मुपार्चित्य |
| २० | १२८ | १ | शृङ्खला | शृङ्खलाः |
| २१ | १३४ | २ | दुखितानाम् | दुःखितानाम् |
| २३ | १४३ | २ | क्रान्तेश्च | क्रान्तेश्च |
| २४ | १४९ | २ | विहार | विहार |
| २८ | १७३ | १ | दुसरहन्ते | दुस्सहन्ते |
| २९ | १८२ | २ | समभ्नन् | समाभ्नन् |
| ३० | प्रथमशीर्षके | | वहुत्र | बहुत्र |
| ३१ | १९४ | १ | सर्वं | सर्वं |
| ,, | १९५ | ३ | पूर्ण त्वं | पूर्णत्वं |
| ,, | १९६ | १ | सम्मित विश्रुते | सम्मितविश्रुते |
| ३२ | १९८ | १ | श्रेष्ठ रीत्या | श्रेष्ठ-रीत्या |
| ३२ | १९८ | ४ | दत्वा | दत्त्वा |
| ३३ | २०४ | २ | प्रकुर्वं | प्रकुर्वं |
| ३४ | द्वितीयशीर्षके | | नीतिज्ञवादि | नीतिज्ञताऽऽदि |
| ३५ | २१४ | १ | बभूब | बभूव |
| ,, | २१५ | ३ | निकुन्तने | निकृत्तनें |
| ३६ | २१८ | ४ | बत ! | वत ! |
| ,, | २२१ | २ | तत्रत्यगान् | तत्रत्यकान् |
| ३७ | २२६ | २ | नाम्नाऽऽदृतु | नाम्नाऽर्चितु |
| ३९ | २४१ | ४ | मकुर्वत | मदाद् वत ! |
| ४२ | [illegible] | ३ | [illegible] | विरच्य |

| पृ० | श्लो० | पं० | अशुद्धाः | शुद्धाः |
|---|---|---|---|---|
| ४४ | तृतीयशीर्षके | | त्रिज | त्रिज |
| " | २६६ | ३ | " | " |
| ४४ | २७० | २ | कृत्वाऽवचोद् | कृत्वाऽवोचद् |
| ४५ | २७३ | २ | ग्राते | ग्राते |
| " | " | ३ | स्तीदखै | तीदणै |
| " | " | " | वं स्तु | वस्तु |
| ४५ | २७४ | १ | सुपुमी | सुषमा |
| " | " | २ | विनिर्मितुं | विसाधितुं |
| " | २७५ | १ | नव भारते | नव-भारते |
| " | " | २ | संवर्धं | संवर्धं |
| ४६ | २७७ | ४ | निर्मितुं | साधितुं |
| " | चतुर्थशीर्षके | | निवृत्ये | निवृत्त्यै |
| ४८ | २६१ | १ | अर्घार्धं | अद्धाऽर्धं |
| ५१ | ३०४ | २ | वाध्यम् | वाध्यम् |
| " | ३०८ | ३ | न्यविचत् | व्यविचत् |
| " | ३१० | २ | आदर्यः | आदार्यः |
| ५३ | ३२२ | २ | म्युपेते | भ्युपेते |
| " | " | " | विद्धम् | विद्धम् |
| " | ३२३ | १ | त्रत्य राज्यानि | त्रत्य-राज्यानि |
| ६० | ३५२ | ३ | वल्लभ | वल्लभ |
| ६२ | ३६१ | १ | घ्यापने | ध्यापने |
| ७१ | ४११ | १ | समाख्यक मुख्य | समाख्यक-मुख्य |
| ७२ | ४१७ | ४ | वाध्यो | वाध्यो |
| ७३ | ४२२ | ३ | समञ्चन् | समाञ्चन् |
| ८० | ४५६ | २ | पड्विंशन्मित | पड्विंशी मत |
| ८२ | ४६४ | १ | वरा | वरा |
| ९० | ५०५ | २ | ब्ययं | व्ययं |
| " | ५०६ | १ | मिधा | मधा |
| ९२ | ५१८ | १ | देव | देव |
| " | ५३३ | १ | वानस्पतौ | वानस्पते |
| ९५ | ५३८ | २ | पुत्री-पुत्रौ | पुत्रौ पूतौ |
| " | " | " | पर्यटाञ्च | पर्यटञ्च |
| ९६ | ५४३ | १ | वितृष्णा | वितृष्णा |
| ९७ | ५४९ | १ | चरितार्ये | चरिताचार्ये |
| १०१ | ६ | १ | बर्जयत् | वार्जयत् |
| " | १० | २ | दिग दिग | दिग्-दिग |

श्री १०८ श्री श्री दक्षिणकालिकायै नमः

# राष्ट्रपतिराजेन्द्रवंशप्रशस्तिः

इष्टवन्दना—

सिद्धिं भक्तजनस्य सञ्जनयते सौम्या स्तुता संस्मृता
याऽऽराध्या विधिविष्णुशम्भुविबुधैर्भक्त्यैव साध्या परा।
सा काली सुरवृन्दवन्दितपदा सञ्ज्ञानगम्या सदा
सद्भावं वितनोतु मे भगवती कल्याणसम्पत्प्रदा ॥१॥

वर्ण्यविषयोपन्यासः—

श्रीमद्राष्ट्रपतेर्महामतिमतो मान्यस्य धर्मात्मनः
कारुण्यामृतपूरितस्य महतः स्वातन्त्र्यविद्योतिनः।
देशोत्थानपरायणस्य नियतं सर्वोदयोद्बोधिनः
श्रीराजेन्द्रप्रसादनामसुधियः कुर्वे प्रशस्तिं प्रियाम् ॥२॥

इदानीं यावन्नो शुभमतिरसौ वर्णनमगाद्
महान्नेता धर्म्ये पथि धृतगतिः संस्कृतगिरा।
अतश्चिन्त्यामेनां त्रुटिमनुभवन् संस्कृतविदाम्
प्रियं श्रीराजेन्द्रं तदिह विदधे वर्ण्यविषयम् ॥३॥

राजानो बहवः स्ववर्णनमगुः सत्कीर्त्तिमन्तः पुरा
वंशानुक्रमराज्यरञ्जितजनास्तत्र स्तुता श्रीरमा।
अद्यत्वे जनतामतं हि महितं तद्राष्ट्रपत्ये स्थितः
सोऽयं सर्वजनानुमोदितपदः संवर्ण्यते सर्वथा ॥४॥

गर्वनिरसनं विनयश्च—

न काव्यं साहित्यं ध्वनिरसमलङ्कारमपि वा
न जाने व्युत्पत्तिं कविरपि न वर्त्ते न मतिमान् ।
परं श्रीराजेन्द्रे नतिमति समुच्चे सहृदये
मुदा श्रद्धोद्गारं कमपि निजतृप्त्यै प्रकटये ॥५॥

राष्ट्रपतेः पूर्वजानां निवासः—

विशालता विशिष्टता च यस्य गौरवास्पदं
स उत्तरप्रदेश एष भारतेऽतिविश्रुतः ।
लसन्ति यत्र पावनानि भुक्तिमुक्तिदान्यपि
सुपूज्यदैवतस्थलानि पोपकाणि संस्कृतेः ॥६॥

विख्यातोत्तरसुप्रदेश इह याऽमोढ़ा समाख्या पुरी
तत्रैवास्य तु पूर्वजाः कुलजनाश्चक्रुर्निवासं सुखम् ।
तस्मात्ते बलियास्थले स्थितिकृतोऽभूवँस्ततः केचन
'जीरादेइ'-मुपेत्य तत्र वसतिं कामं वितेनुस्तदा ॥७॥

वर्त्तमानग्रामः—

विहारे सत्प्रान्ते शुभसुखमये 'सारण'-मिदं
सुनेतृत्वार्थं यत्प्रमुखमधिकं मण्डलमिह ।
तदन्तर्गा सौम्या शुचितमपुरी राजतितरा-
मियं 'जीरादेइ' - र्वरसुतवती राष्ट्रपतिना ॥८॥

श्रीराजेन्द्रप्रसादस्य पितामहः—

महामान्यः श्रीवास्तवकुलमणिश्चारुचरितः
स कायस्थः श्रेष्ठो विविधगुणभृद्धर्मनिरतः ।
सुधी - 'मिश्रीलालो' हरिचरणपङ्केरुहमनाः
सुनामा तत्राभूत् सकलजनवन्द्योऽतिविभवः ॥९॥

महीयान् सच्छीलैर्मधुरमतिवृत्त्या च ललितः
कुलीनो ग्रामेशः पुरजनहृदानन्दजनकः ।
स दीनानां भर्त्ताऽमितभुजबलो वीरपुरुषो-
बभूवात्यन्तं सम्प्रथित इह दानेन दयया ॥१०॥

*पितामहज्येष्ठभ्राता—*

तदग्रजश्चौधुर - लालनामा
धन्यो बभूवात्र यशोभिरुग्रैः ।
स्वबुद्धिवैदुष्यपरिश्रमैः स
चकार वश्यं हथुआनरेशम् ॥११॥

विश्वस्त आसीत् परमः स राज्ञ-
स्तद्राज्यसंरक्षणकृत्यनिष्ठः ।
अतीव भूसम्पदमाप यस्मात्
प्रभूत - सम्मानपुरस्कृतीश्च ॥१२॥

प्रस्तावयाञ्चक्रुरमुष्य वंश्या
यदाऽभियोगं निजभागहेतोः ।
राज्ये तदाः राज्यविभक्तिमेष
रुरोध राजानमपि प्रणाशात् ॥१३॥

अद्यापि सम्पत् प्रचुराऽस्ति गेहे
प्रतापिना तेन समत्र लब्धा ।
कीर्त्याऽनया स्वर्गत एष लोके
विद्योतते गौरवमादधानः ॥१४॥

पिता—

ततस्तत्सत्पुण्यैरजनि जनसम्मानकलितः
स मिश्रीलालस्य प्रियतनय एकः सुविदितः।
सहायोपाह्वोऽसौ श्रुत इह 'महादेव' इति यः
स्वनाम्नोऽन्वर्थत्वं शिवकृतिभिरुद्घोष्य ह्यपितः ॥१५॥

विरेजे सम्पद्भिर्निजकुलमहिम्नाऽतिमुदितः
प्रदीपो वंशेऽस्मिन् विशदसुयशाः पुण्यलसितः।
विशिष्टो विद्याभी रघुपतिपदाम्भोजमधुपो-
'महादेवः' ख्यातः श्रुतिमतिरसौ पूतचरितः ॥१६॥

स्वनाम्ना धन्योऽसौ बहुविधसदाचारकुशलो-
महाप्राज्ञः श्लाघ्यो बुधनिवहपूज्योऽतिविदितः।
स्फुरद्दीप्त्या दिव्यः सततजनकल्याणनिरतो—
महौजाः सम्मान्यो नयमुपगतो भूपतिसखः ॥१७॥

पपाठ सम्यग् द्रुतमेव फारसीं
स्वबाल्यकालेऽतितरां मनोज्ञः।
विदेशिभाषा अपि वेद चासौ
प्रशंसनीयो मतिमान् वरेण्यः ॥१८॥

स दैवीं वाचं प्राक् तदनु तरसा वैद्यकविधिं
चिकित्सां तिब्बीयामपि समगमत् प्रोज्ज्वलधिया।
ऋते शुल्कात् प्रेम्णाऽकुरुत विरुजानार्त्तसरुजः
शरण्यः सैषोऽभूत् सततकरुणापूर्णहृदयः ॥१९॥

आरोपयामास स चूतवृत्ता-
मुद्यानरूपान् बहुधा बहुत्र ।
फलैः समृद्धाः प्रतिवर्षमस्य
कुलोद्भवान् ये परितोषयन्ति ॥२०॥

श्रीमान् 'महादेवसहाय' एष
सद्धर्मनिष्ठो मधुरस्वभावः ।
दयार्द्रचेताः सुजनोपकर्त्ता
रराज पूर्णं प्रियसाधुशीलः ॥२१॥

*माता—*

सैष महादेवः स्वां रुचिमिव रम्यां परां श्रेष्ठाम् ।
उपयेमे सौभाग्यैर्लसितां शीलोज्ज्वलां जायाम् ॥२२॥

गुणगणभूषणधृत्या पातिव्रत्यप्रभासृत्या ।
पत्यनुगत्या रेजे स्मृतिरिव सा वेदसंश्रित्या ॥२३॥

श्रीमन्महादेवसहायकस्य पतिव्रता सौम्यगुणाभिरामा ।
अजीजनत् सन्ततिपञ्चकानि सौभाग्यशीलानि गुणाकराणि ॥२४॥

*मातृभगिन्यः—*

पञ्चसु तासु च तिस्रः
सन्ततयोऽस्य प्रभावैः स्वैः ।
जग्मुः ख्यातिं लोके
लोकालोकनकलापूर्णाः ॥२५॥

प्रथमं सुषुवे कन्यां धन्यां शीलैः सुसम्पन्नाम् ।
सद्भाग्यौ सूनू द्वौ परतः सोत्पादयाञ्चक्रे ॥२६॥

*तत्र ज्येष्ठा श्रीभगवती देवी—*

तन्मध्ये कन्यका लोके नाम्ना भगवती मता।
धर्मज्ञानावृता नित्यं हरिभक्तिरता सदा ॥२७॥

स्वराज्यप्राप्तिहेतोर्या कारागारमुपाश्रिता।
धीरा सत्यव्रता सैषा निर्भीका स्पष्टभाषिणी ॥२८॥

योग्या प्रतिनिधित्वेन विहारे साऽभवत्तदा।
विधानपरिषन्मध्ये सदस्या गौरवान्विता ॥२९॥

विधिज्ञा परिषत्कार्ये वक्तृतायां पटीयसी।
ज्यायसीयं सदस्येषु वयसा च प्रतिष्ठया ॥३०॥

महात्मना गान्धिनाऽपि भूयो भूयः समादृता।
साध्वीनाञ्चोत्तमं धर्मं तनयन्तीह राजते ॥३१॥

तामिमामग्रजां धन्यां जननीमिव मन्यते।
मान्यो राष्ट्रपतिर्भ्राता श्रीमान् राजेन्द्रनामकः ॥३२॥

अस्या भगिन्याः प्रीत्यर्थं लोकानाञ्च हितेच्छया।
पक्वेष्टिकाभिः पाषाणैरुन्नतं सुकलान्वितम् ॥३३॥

निर्मापितं दृढं भव्यं सुचिरं भक्तिवर्द्धनम्।
श्रीराजेन्द्रप्रसादेन स्वग्रामे देवमन्दिरम् ॥३४॥

तत्र नारायणो देवः श्रीलक्ष्म्या सहितो विभुः।
संस्थापितः पूजितश्च शाश्वतत्वाय भूतले ॥३५॥

इयं भगवती देवी धन्या जीवत्यहो क्षितौ ।
द्रष्टुं राष्ट्रपतिं नित्यं कनिष्ठं भ्रातरं प्रियम् ॥३६॥

*ज्येष्ठभ्राता श्रीमहेन्द्रप्रसादः—*

भ्रात्रोर्ज्यायान् सुमतिमान् श्रीमहेन्द्रप्रसादकः ।
प्रियस्तदनुजो धीमान् श्रीराजेन्द्रप्रसादकः ॥३७॥

स्नेहादानप्रदानेनाराजेतान्तौ मुदान्वितौ ।
भ्रात्रोर्मध्ये महाप्रीती रामलक्ष्मणयोरिव ॥३८॥

सम्यग् विद्यामुरीकृत्य महेन्द्रः स्वभुजार्जितम् ।
प्रतिष्ठितपदासीनः प्रचुरं धनमाश्रयत् ॥३९॥

करुणामूर्त्तिको वाग्मी माधुर्यगुणसंवृतः ।
विद्याविभवदीप्त्याऽसावद्योतत निरन्तरम् ॥४०॥

दीनानां दुःखतप्तानां दुःखं छेत्तुं समुत्सुकः ।
परावर्त्तत नो कोऽपि स्वेष्टपूर्त्तिं विना ततः ॥४१॥

समाश्रयत्तु यो धीरं तं हि सर्वोपकारकम् ।
तस्यापदो नहि क्वापि यथा विष्णुनिषेविणः ॥४२॥

अग्रेसरः सभायां यो जनानां सर्वदाऽभवत् ।
यथा देवसभामध्ये महेन्द्रः श्रेष्ठतां गतः ॥४३॥

बुद्धौ यथा वरिष्ठोऽस्ति सुरेज्यो विबुधालये ।
शिरोमणिर्बुद्धिमतां सोऽभवद् वसुधातले ॥४४॥

स्वदेशकार्यलग्नाय स्वानुजाय धनादिकम् ।
कांग्रेसकार्यसिद्धयर्थं प्रायच्छत् स्वयमेव सः ॥४५॥

निजानुजं फलप्राप्त्यै स्वातन्त्र्ये विनियोजयन् ।
कांग्रेस - संस्थास्थधनव्ययार्थे समवाधत ॥४६॥

विद्यावतां सतामग्रे प्रशस्तो मानमर्जयन् ।
शुशुभे वितरँस्तेभ्यो वैभवानि बहूनि सः ॥४७॥

प्रतापिनो महेन्द्रस्य महत्त्वं दूरमाव्रजत् ।
यशांसि ख्यातिमाजग्मुस्तद्दानस्य च सर्वतः ॥४८॥

प्रकृष्ट - ज्ञानगुरुतामुपाश्रित्य रराज सः ।
सञ्जाताऽत्र गतिस्तस्य सर्वलोकसुखावहा ॥४९॥

दृढव्रतः सत्यवादी सद्राजगुणभासितः ।
प्राकाशत महाकीर्त्या स्वमयूखैर्यथा रविः ॥५०॥

आह्लादशान्तिजनने शरच्चन्द्रनिभस्त्वसौ ।
सर्वेषां पोषणे लग्नोऽमृतं दुग्धं यथा गवाम् ॥५१॥

यथा नाम तथा कार्यं श्रीमहेन्द्रस्य नित्यशः ।
रिपवो नहिं तस्यासन्नघो गङ्गाम्भसो यथा ॥५२॥

कृतज्ञास्तस्य कार्येण लोकास्तस्मिन् जनप्रिये ।
शुभवादाँस्तदाऽकुर्वन् महेन्द्रेऽतुलविक्रमे ॥५३॥

शुभाशिषः पुण्यवन्तो ववर्षुस्तस्य मूर्द्धनि ।
यथा मेरुगिरेः शृङ्गे धारां वर्षन्ति वारिदाः ॥५४॥

श्रीमहेन्द्रप्रसादोऽयं देशस्वातन्त्र्यहेतवे ।
समग्रं कृतवान् सम्यक् प्रयत्नं लोकविश्रुतम् ॥५५॥

सर्वतन्त्रस्वतन्त्रत्वे भारतस्य महत्प्रियम् ।
विविधं कार्यमकरोज्जनानामुपकारकम् ॥५६॥

विद्याप्रचारार्थमसौ विद्यालयविनिर्मितिम् ।
कृतवान् विविधां संस्थाञ्चापि देशहितात्मिकाम् ॥५७॥

परेषां दुःखमालोक्य कृपार्द्रहृदयो महान् ।
प्रियत्वं लब्धवाँल्लोके दानेन यशसा तथा ॥५८॥

धर्मैः शीलैश्चरित्रैश्च विद्याभिः शोभतेस्म यः ।
स्वप्रतापेन महता महेन्द्र इव विश्रुतः ॥५९॥

कांग्रेससेवया कीर्त्या लोके ख्यातिमुपेत्य च ।
देवेन्द्रेण समं स्थातुं सुखं स्वर्गमगादसौ ॥६०॥

* * * * *

*राष्ट्रपतेः श्रीराजेन्द्रप्रसादस्य जन्म तत्समयश्च—*

श्रीमद्विक्रमभूपतेर्विधुयुगाङ्केन्द्वङ्किते वत्सरे
पौषे मास्यसिते दले बुधदिने वह्नेस्तिथौ शोभने ।
मातुर्धर्मबलेन पितृतपसा देशस्य भाग्यैस्तथा
श्रीराजेन्द्रप्रसाद एष हि महानात्माऽवतीर्णः क्षितौ ॥६१॥

रत्नैः सङ्कलितैः पलैः शरमिते दण्डे शुभेष्टक्षणे
चन्द्रर्क्षस्य तदाऽऽद्यपाद इह, संदृष्टे सुरेज्येन तु ।—
राज्ग्रेशेन धियः पतेः स्थितिवशात् सद्गानयोगोत्तमे
श्रीभौमस्य दशान्तरे सुसमये प्रादुर्बभूवैष सः ॥६२॥

*ग्रहस्थितिस्तत्फलञ्च*—

धनुर्लग्ने सौम्ये बुधधरणिजौ, तुर्यसदने—
शिखी, षष्ठे चन्द्रो, विलसति शनिः कामभवने ।
सुरेज्यो भाग्यस्थो, दशमभवने राहुरपि; च
भृगुर्लाभे, रिःफं दिनपतियुतं, जन्मसमये ॥६३॥

जन्मस्थग्रहवीक्षणेन सुफलं प्रोवाच तत्राद्भुतं
दैवज्ञो गणनापटुः सुनियतं राजाधिराजः शिशुः ।
देशे भारतवर्षके सुविदिते शास्ता भविष्यत्यसौ
स्वातन्त्र्यं तनयिष्यते जनमतं प्रोद्भासयन् भूतले ॥६४॥

*संस्कारः*—

माता पुण्यपरायणाऽस्य च पिता धर्माध्वसंस्थो महान्
श्रीविष्णोश्चरणाम्बुजार्चनरतो वेदानुसारन्तदा ।
संस्कारं सकलं चकार शुभदं सूनोः प्रशस्तस्य यत्
तस्मादुच्चतमाऽभवत् सुधिषणा भाग्यं परं चोच्चगम् ॥६५॥

*वृद्धजनानां शुभाशंसा*—

भूष्णुः सोऽयं निशितमतितः शैशवादेव दीप्तो-
लोके वृद्धैरपि पटुतमो घोषितः श्रेष्ठभाग्यः ।
वृष्टेर्बोधो भवति हि यथा वारिवाहावलोकै-
रेनं दृष्ट्वा पुरवसतयः पूर्वमेवाशशंसुः ॥६६॥

*धार्मिकत्वे हेतुः—*

मातास्य यामे चरमे रजन्याः
सम्बुद्ध्य नित्यं हरिभक्तिगीतैः ।
एतस्य धर्मोन्मुखवृत्ति - हेतो—
राधारभूमिं रचयाञ्चकार ॥६७॥

*शैशवे बुद्धिवैलक्षण्यम्—*

जन्मान्तरीणसंस्कारलब्धप्रज्ञाशुभोदयः ।
बाल्यादेवायमभवद् विद्युत्प्रतिभयाऽन्वितः ॥६८॥

कालेनाल्पेन गुरुतोऽसौ गुरुं ज्ञानसंबलम् ।
सञ्चित्य प्रस्फुरत्स्फीतबोधो गौरवमावहत् ॥६९॥

*मौलवीतः शिक्षा—*

उर्दूभाषां तल्लिपीश्च गहनाः स्वगृहे तदा ।
समग्रहीत् सुखेनैष मौलवीसाह्वाद् गुरोः ॥७०॥

*प्रतिभोज्ज्वलता—*

पाठस्य जटिलग्रन्थिं वैदुष्येणाच्छिनत् स्वयम् ।
ज्योतिर्जुष्टा शेमुषी साऽमुष्य प्राज्वलदञ्जसा ॥७१॥

अस्याश्चर्यकरी स्फूर्त्तिः समस्तविषये परा ।
पद्मपत्रप्रभेदे तु सूचीव निशितानना ॥७२॥

*अध्ययनस्थानानि—*

स्वग्रामाच्छपरां पुरा तु गतवानध्येतुमिच्छन्नयम्
पश्चात् पाटलिपुत्रमेत्य सुमना विद्यामवाप्तुं रतः ।
टी० के० घोषसमाह्वये सुविदिते विद्यालये शोभने
राजेन्द्रः समुदग्रधीर्गुरुजनैर्वर्ण्योऽभवत् स्वैर्गुणैः ॥७३॥

शुभविवाहः—

श्रीमान् महादेवसहाय एकं
पत्न्गास्तथाऽन्यस्य शुभेच्छुकस्य ।
प्रियात्मजस्येह विवाहहेतो-
र्विचारमासादितवाँस्तदानीम् ॥७४॥

बालस्य राजेन्द्रप्रसादसूनोः
प्रशस्तवंशे शुभशीलया सत् ।
सम्पादयामास शुभं विवाहं
श्रीस्वस्तिमत्या प्रियबालया सः ॥७५॥

पत्नी श्रीमती राजवंशी देवी—

शील - सौभाग्य - सद्राजमहिषीगुणसम्भृताम् ।
उपयेमे तु राजेन्द्रो राजवंशीतिनामिकाम् ॥७६॥

विवाहिता सौम्यगुणाभिरामा
नारी प्रशस्ता सुषमामनैषीत् ।
अवाप्य पूतं पतिदेवमेनं
कुमुद्वती चन्द्रमसं यथेह ॥७७॥

अम्भोजसङ्गादिव सस्यसम्पद्
वसन्तसङ्गाच्च यथा वनाली ।
तथैव सौम्या किल राजवंशी
राजेन्द्रयोगेन रुचिं समश्नुत ॥७८॥

यथा लक्ष्मीन्तु सम्प्राप्य बभौ नारायणो हरिः ।
राजवंशीन्तथा प्राप्य राजेन्द्रो भाति सन् मुदा ॥

*हथुआ-छपराविद्यालये च पठनम्—*

अनन्तरं संपठितुं प्रयातो
विद्यालयेऽसौ हथुआस्थिते तु ।
स्थित्वाऽत्र मासान् कियतस्ततोऽपि
प्राध्येतुमापच्छपरां सुतेजाः ॥७९॥

*भ्राता सहास्य देशीयवस्त्रासक्तिः—*

ज्यायान् भ्राता महेन्द्रः सुविदितधिपणोऽगात्प्रयागादधीत्य
ग्रामं देशोद्भवं सद्वसनमपि नयन् तत्प्रशंसां व्यधत्त ।
धर्त्तुं देशीयवस्त्रं बहुविधजनताः प्रत्यवोचत्तदाऽसौ
यच्छ्रुत्वा श्रद्दधानोऽभवदयमधिकं तत्र देशीयवस्त्रे ॥८०॥

वर्धिष्णूनां भवति नियमः सत्स्वभावानुकूलः
पूर्वादेवाप्रमितयशसां भाग्यसम्पद्युतानाम् ।
तस्मादेप प्रथमवयसि च्छात्रकाले सुतेजा
देशीयं सद्वसनमखिलं प्रादधाद् देशभक्तः ॥८१॥

*कैशोरे वयसि भगवति निष्ठा—*

सोऽयं सच्छपरास्थिते तु निवसन् विद्यालये प्रत्यहं
भक्त्या दर्शनहेतवे भगवतस्तन्मन्दिरं प्रत्यगात् ।
देवीये विषये परोऽस्य महतो विश्वास एवं यतः
सर्वश्रेष्ठमतोऽत्र भाग्यमिति तन्मन्येऽस्ति सद्भारते ॥८२॥

*तत्राभिभावको ज्यौतिषी—*

आसीत्तदानीमभिभावकोऽस्य
पाठाय धर्माय च रक्षणाय ।
श्रीविक्रमादित्य इहातिमान्यः
सज्ज्यौतिषी धर्मपरः पटिष्ठः ॥८३॥

संस्कृताध्ययनम्—

महामहोपाध्यायाच्च रघुनन्दनशर्मणः ।
संस्कृतस्यानुरागेण सोऽपठल्लघुकौमुदीम् ॥८४॥

बाल्ये बहुभाषाऽध्ययनम्—

बाल्ये गीर्वाणवाणीं ससुखमधिगतः सोऽत्र हिन्दीमधीत्य
सूक्ष्मत्वेनाप्यजानात् कटुकठिनतमां फारसीश्चाङ्ग्लभाषाम् ।
श्रौतीं स्मार्त्तीश्च वेदामितसुमतिरसौ गूढगम्भीरविद्या-
मोजःप्राचुर्यहेतोः प्रथमपदमतश्छात्रवर्येष्वविन्दत् ॥८५॥

एण्ट्रेन्सपरीक्षायां विश्वविद्यालये सर्वप्राथम्यम्—

वङ्गासामविहाराणां वर्मोत्कलयुजान्तदा ।
विश्वविद्यालयस्त्वेक आसीत् कलिकतापुरे ॥८६॥

एण्ट्रेन्से सत्परीक्षां सुविदितधिषणः सम्यगुत्तीर्य तत्र
सर्वप्राथम्यहेतोर्गगनभुजमिताम् २०) मानदामद्वितीयाम् ।
लब्ध्वा दिग् १०) रौप्यकाणां सुविशदमतितश्छात्रवृत्तिन्तथाऽसौ
प्रापद्दिव्यां प्रतिष्ठां सुपठनसमये विश्वविद्यालयीयाम् ॥८७॥

कलिकतायां छात्रजीवनं वैशिष्ट्यञ्च—

स्फूर्जद्बोधवितानसंस्कृतमनाः शश्वत्सदाचारवान्
सच्छीलैश्च सुतीक्ष्णपूतमतिभिः सद्विद्य एषोऽभवत् ।
विद्यां प्राप्तुमतः परं कलिकतां यातः क्षितेरर्जुनो-
देवेन्द्रान्तिकमाप दिव्यरुचिराण्यस्त्राणि लब्धुं यथा ॥८८

सद्भाग्याद्विभवान्वितात् स्वजनकात् सद्गानमानावृतात्
पर्याप्तं धनमापदत्र सुखदं प्रारम्भकाले ह्यसौ ।
तत्राप्युच्चतमाद्भुतां सुधिषणां विद्यां विदित्वाऽस्य ते
शिक्षाचालनतत्परा मतिमते वृत्तिन्तदाऽस्मै ददुः ॥८९॥

आरम्भादेव सम्यग्विकसितधिषणो वाक्पटुत्वे प्रवीण-
श्छात्राणामग्रगण्यः सकलजनहृदानन्दकृद्यो विशेषात् ।
वाणीं वेदातिरम्यामतिशयरुचिरो लेखकार्ये प्रशस्तः
संस्कारोद्दीप्तिरस्यामितमहितमतेर्मानदाऽद्योततात्र ॥९०॥

*एफ्० ए० परीक्षायां त्रिधा छात्रवृत्तिः—*

तत "एफ्० ए०" परीक्षायां सर्वप्राथम्यहेतुतः ।
विश्वविद्यालयेनासौ छात्रवृत्त्या पुरस्कृतः ॥९१॥

पञ्चविंशन्मितामेकां दिङ्मितामपरान्तथा ।
तृतीयां पञ्चदशकां छात्रवृत्तिमुपागमत् ॥९२॥

*वङ्गभङ्गान्दोलनम्—*

तदैव वङ्गभङ्गाख्यमान्दोलनमजागरत् ।
वङ्ग-भङ्गं यतः कर्त्तुं प्रोद्यता आङ्ग्लशासकाः ॥९३॥

आन्दोलने सक्रिययोगमेष
उत्साहयुक्तः कृतवान् मनस्वी ।
वैदेशिका रुष्टिमितास्तदानी-
मान्दोलनं नैव जगाम शान्तिम् ॥९४॥

*वैदेशिकवस्तुबहिष्कारः —*

आन्दोलने सर्वमतानुसारं
विनिर्णयं प्राप विचार एषः।
वैदेशिकानामिह सर्वथैव
वस्तूनि हेयानि जनैरिहत्यैः ॥९५॥

ततोऽपि पूर्वं बहु वस्तु सैप
वैदेशिकं द्रागजहाद् विवेकी।
दृष्ट्वा तदैनं सुहृदोऽप्यमुष्य
वैदेशिकं वस्तु सुखादमुञ्चन् ॥९६॥

*बी० ए० परीक्षायां सर्वप्रथमता द्विधा वृत्तिश्च—*

ततो बी० ए० परीक्षायां सर्वप्राथम्यमाप्य सः।
आमोदयद् गुरुजनान् सुयोग्यत्वेन बुद्धिमान् ॥९७॥

पञ्चाशद्रौप्यकस्यैकां चत्वारिंशन्मितस्य च।
प्रापद् द्वितीयां मतिमान् वृत्तिन्तत्र पुरस्कृताम् ॥९८॥

*छात्रसम्मेलनं कांग्रेसश्च—*

छात्रसम्मेलने चायं कांग्रेसे मतिमाँस्तदा।
बहुधा समितिं कृत्वा तत्तत्कार्याण्यसाधयत् ॥९९॥

भारतस्याखिलस्यायं कांग्रेससमितेः कृते।
निर्वाचितः सदस्यस्तत्कर्मणा छात्रजीवने ॥१००॥

*एम०-ए० परीक्षा—*

ततो मुख्यपरीक्षायाम् "एम० ए०" नाम्न्यां महामतिः।
साफल्यं प्राप्य मेधावी प्रतिष्ठां परमां गतः ॥१०१॥

*परीक्षासु पारितोषिक-पदकादि—*

अनेनैव परीक्षासु पुस्तकं पारितोषिकम् ।
सुवर्णपदकञ्चैव सम्प्राप्तं सुमनीषिणा ॥१०२॥

कति प्रमाणपत्राणि वैदुष्यद्योतकानि वै ।
उपलब्धानि विद्यायां साफल्येन विपश्चिता ॥१०३॥

एवङ्कलिकतायान्तु विश्वविद्यालयोच्चगाम् ।
शिक्षां दीक्षामुपार्ज्जित्य सुप्रतिष्ठो महानभूत् ॥१०४॥

श्रेणीं श्रेष्ठपदामुपेत्य सकले विद्यापरीक्षाविधौ
सोऽयं बुद्धिविवेकशीललसितो नीतौ परं पण्डितः ।
उत्थानं द्रुतमाकलय्य जगति प्रोद्भासमानः सदा
सञ्जातः सुमनोमनो मधुरयन् राजेन्द्रनामा सुधीः ॥१०५॥

*दैवज्ञसमीपे प्रश्नः*

मित्रैः साकमगात् पुरा गणितविज्ज्योतिर्विदोऽग्रे मुदा
देशे योरपसंज्ञके सुविदिते यास्याम्यहं किन्तु वा ।
एतद्धेतुकप्रश्नमेष कृतवान् ज्योतिर्विदोद्घोषितं
त्वन्मित्रं त्वधुना गमिष्यति ततो गन्ता विलम्बैर्भवान् ॥१०६॥

तथैव सत्यं घटितं फलं तत्
प्रियोऽस्य मित्रं शुकदेववर्मा ।
पूर्वं गतो न्यायपतिर्य आसीत्
परं गतोऽयं शुभदेशरत्नम् ॥१०७॥

प्राध्यापकता—

पूर्वं मुजफ्फरपुरं प्रभया प्रसाद्य
यातस्ततः कलिकतां गुणगौरवाढ्यः ।
प्राध्यापकत्वमुभयत्र समेत्य शिष्यान्
विद्यालये महति दीप्तिपरानकार्षीत् ॥१०८॥

विधिशास्त्राध्ययनम्—

दायभागादिकन्यायविधिशास्त्राणि तत्त्वतः ।
समधीतानि तत्रैव द्रुतं मेधाविना तदा ॥१०९॥

माननीयगोपालकृष्णगोखलेपरिचयः—

आसीत् स्वातन्त्र्ययुद्धे प्रमुख इह तदा दुन्दुभिध्वानकर्त्ता
योऽसौ गोपालकृष्णः सुविकचमहिमा गोखलेख्यातनामा ।
आदौ तत्र प्रगाढं परिचयममुना प्राप्य कांग्रेसहेतो-
र्देशप्रेम्णा समुच्चां रुचिमयमतनोच्छ्रीलराजेन्द्रधीरः ॥११०॥

कलिकतायां प्राग्विवाकव्यवसायः—

विधिज्ञवृत्तिमातन्वँस्तत्रायं नीतिमास्थितः ।
प्राकाशयज्जनमनो द्युमणिः कमलं यथा ॥१११॥

तत्रैव प्राग्विवाकेषु वरीयान् स्वधिया द्रुतम् ।
उच्चन्यायालये प्रापत् प्रसिद्धिं जनरञ्जनाम् ॥११२॥

उपेयिवाँश्चाकचिक्यं व्यवसाये धनावहम् ।
यशांस्यराजन् कृत्याऽस्य वर्द्धमानानि सर्वतः ॥११३॥

न्यायाधिपतयस्ते च सुविदस्तत्सवृत्तयः ।
जाज्वल्यमानां प्रतिभामस्याऽवन्दन्त तेऽमलाम् ॥११४॥

*सर्वप्राथम्येन "एम्० एल्०" परीक्षोत्तीर्णता—*

तत "एम्० एल्०" परीक्षाऽपि समुत्तीर्णा विपश्चिता ।
सर्वप्राथम्यमेत्यात्र सम्मानं लब्धवानसौ ॥११५॥

*परीक्षायां विशेषता—*

परीक्षासमितावस्य सुवृत्तं तत्र विश्रुतम् ।
परीक्षकात् परीक्ष्योऽयं योग्योऽस्तीति जनश्रुतिः ॥११६॥

ख्यातिरेषा परीक्षायाः समितावस्य धीमतः ।
चिराय स्थापिता नूनं तत्राध्यक्षमहोदयैः ॥११७॥

*पाटलिपुत्रे विधिज्ञवृत्तिः—*

ततः पाटलिपुत्रेऽसावुच्चन्यायालये स्थितः ।
विधिशास्त्रोचितां वृत्तिं तन्वन् ख्यातिमुपागमत् ॥११८॥

*धनोपार्ज्जनम्—*

लब्ध्वा भूरिधनं सम्यक् प्रतिष्ठां प्रवरामिह ।
प्रकाशमगमच्छीघ्रं यथा सूर्योऽरुणोदये ॥११६॥

*गुणमहिमा ख्यातिश्च—*

प्रोद्यत्कीर्त्या मतिललितया ख्यातिभासः समन्ताद्
दर्शं दर्शं नयगतिविधिं तत्र गाढ़प्रवेशः ।
लोकामोदी प्रियगुणगणो भारतद्योतनात्मा
तेजोधामा महितमहिमा सोऽयमेवं व्यराजत् ॥१२०॥

*महात्मगान्धिना सम्पर्कः—*

अफ्रिकातः समागत्य गान्धी देशं परिभ्रमन् ।
चम्पारणे दुःखतप्तानुद्धर्तुं कृपकानगात् ॥१२१॥

तत्तत्कार्यार्थमेवात्र गान्धिना देशसेविना ।
आदौ परिचयं प्रापत् सोऽयं लोकहितोत्सुकः ॥१२२॥

*चम्पारणे सत्याग्रहश्च—*

अन्तरङ्कुरिता चास्य देशस्वातन्त्र्यभावना ।
महात्मगान्धिसम्पर्कादुद्रेकं प्रापदद्भुतम् ॥१२३॥

अफ्रिकानुभवात्सिद्धो वन्द्यो गान्धिमहोदयः ।
चम्पारणेऽचालयत् प्राक् सत्याग्रहरणं शिवम् ॥१२४॥

*भोगवस्तूनां त्यागः—*

ततः प्रभृति राजेन्द्रः पारतन्त्र्यविनाशने ।
भोगैषणां त्यागवह्नौ प्रज्वाल्य द्युतिमाश्रितः ॥१२५॥

आधानीसहितान् ग्रन्थान् भोगवस्तूनि तानि च ।
स्वोपार्ज्जितानि यान्यासन्नत्यजद् देशहेतवे ॥१२६॥

*जनचैतन्यहेतुकप्रयासः—*

लक्ष्यमेकमुरीकृत्य स्वातन्त्र्यं तद्गतो भवन् ।
जनचैतन्यजागर्त्यै धीरः प्रायततानिशम् ॥१२७॥

मोहाच्छन्नानिव जनान् पराधीनत्वशृङ्खला ।
यानकुर्वत तानेष ज्ञानांशुभिरबोधयत् ॥१२८॥

*काँग्रेसे सक्रियो योगः—*

सदा हि कांग्रेसमहासभायाः
कार्यात्मिकायाः समितेः सदस्यान् ।
विधौ तदीये समबोधयत्तान्
प्रारूपरूपं विरचय्य रम्यम् ॥१२९॥

राजनीतिपथे क्लिष्टे सूक्ष्मप्रेक्षणया क्षितौ ।
स्वकीयमादृतं स्थानमशिश्रियदसौ सदा ॥१३०॥

*काँग्रेसकार्यसमितिसदस्यता—*

काँग्रेसकार्यसमितेः सदस्यत्वेन सर्वदा ।
प्रशंसितो गान्धिनाऽसौ पारदर्शी नयाम्बुधेः ॥१३१॥

*गान्धिनोऽनुयायिता—*

गान्धिना यत्कृतं कार्यं शुभं स्वातन्त्र्यहेतवे ।
असेवतानुपूर्व्येण कर्तुं तच्चाप्ययं सुधीः ॥१३२॥

*चम्पारणान्दोलनम्—*

राजेन्द्रबाबूसहयोगितासो-
गान्धी महात्माऽत्र विहारमध्ये ।
चम्पारणं प्राप्य विदेशिमुक्त्यै
सर्वाग्रमान्दोलनमातनिष्ट ॥१३३॥

आन्दोलनं सच्छ्रमजीविनां तद्
विदेशिभिर्दुःसहदुखितानाम् ।
अभूत्तदा कृष्युपजीविनाञ्च
न्याय्यं सुखायोचितवित्तलब्ध्यै ॥१३४॥

*तत्र साफल्यम्—*

चम्पारणे लोकसुखार्थमत्र
श्रीगान्धि - राजेन्द्रप्रसादयोस्तैः।
यत्नैः समुन्मूलनमापितास्तु
वैदेशिका नीलधनापहास्ते ॥१३५॥

चम्पारणे गान्धिमहोदयस्य
राजेन्द्रजीवस्य च सत्प्रयासैः।
स्वदेशसौख्याय हिता सुवृत्ति-
रजायतास्मिन् हृदि मानवानाम् ॥१३६॥

*राष्ट्रियमहाविद्यालयः—*

प्राक् शुल्कं मासिकं दत्वा
गृहं नीत्वाऽन्यतो वरम्।
अचालयद्राष्ट्रियं स
महाविद्यालयं परम् ॥१३७॥

*मौलाना मजहरुलहकप्रयासेन सदाकताश्रमः—*

प्रेम्णा पाटलिपुत्रपत्तनवरे गङ्गातटे दक्षिणे
शान्तं सौम्यसदाकताश्रममिमं देशाय गर्वास्पदम्।
मौलाना हकसाह्वो गुणगुरुर्निर्माय तत्रावसद्
यत्स्थानं प्रथितं चकास्ति नितरां कांग्रेसकार्येऽधुना ॥१३८॥

*राष्ट्रियमहाविद्यालये प्रधानाध्यापकता—*

ऋते शुल्कात् समभवत् प्रधानाध्यापकः सुधीः।
श्रीराजेन्द्रप्रसादोऽसौ शास्त्रतत्त्वार्थपारगः ॥१३९॥

*अत्र सहयोगिनः—*

बहुविधविद्यावृद्धौ प्रेम्णा निरताः सुविद्वांसः ।
प्राध्यापका नियुक्ता बदरीनाथादयो मान्याः ॥१४०॥

देशोत्थानसुलग्ना अभवन् विद्यालये सौम्ये ।
स्वरुचिन्तत्र दधानाः प्रीत्या विद्याविभूषितास्ते च ॥१४१॥

स्वां स्वां धनदां वृत्तिं
त्यक्त्वा धन्या इमे सुमतिमन्तः ।
विद्यालये सुलग्नाः
प्रेम्णाऽराजन्त तत्रैव ॥१४२॥

*राष्ट्रियविद्यालयस्य ख्यातिः—*

ख्यातोऽभूद्राष्ट्रियश्चैष महाविद्यालयस्तदा ।
सम्यग्विद्याविवृद्ध्यर्थमन्तः क्रान्तेश्च वृद्धये ॥१४३॥

*बिहारविद्यापीठस्थापनम्—*

राजेन्द्रधीरेण विचारितन्तदा बिहार विद्यापदयुक्तपीठः ।
कथं भवेच्चिन्तयता निवेदितं श्रीगान्धिनोऽग्रे द्रुतमत्र सम्यक् ॥१४४॥

*गान्धिमहात्मना विद्यालयोद्घाटनम्—*

तदर्थमायोजनकृत्तदाऽभूद् राजेन्द्रनामा शरदिन्दुधामा ।
बिहारविद्याशुभपीठ एक उद्घाटितो गान्धिमहात्मनाऽत्र ॥१४५॥

*देशरत्नस्य प्राचार्यत्वे पाठ्यक्रमादिनिर्धारणम्—*

पाठ्यक्रमं सत्समितिं परीक्षाकृते विनिर्मापितवांश्च धीरः ।
सैषोऽद्भुते देशहिताय विद्यापीठे तु प्राचार्यपदे स्थितः सन् ॥१४६॥

*मौलाना हकस्य कुलपतित्वम्—*

कुलपतिपदे नियुक्तो मौलाना मजहरुलहकस्तत्र ।
विद्याप्रेमा योऽभूद्धिन्दूमुस्लिमसमानसन्द्रष्टा ॥१४७॥

*तत्र छात्राणामाकर्षणम्—*

छात्रा महद्भ्यो नृपचालितेभ्यो विद्यालयेभ्यः पठनास्थितेभ्यः ।
प्रोत्साहिताः सम्पठितुं विशिष्टाः समागमन्त्स्वीयविचारतोऽत्र ॥१४८॥

*सदाकताश्रमे विद्यापीठानयनम्—*

अयन्तदा वैतनिके तु गेहे बहुव्ययं वीक्ष्य, सदाकताश्रमे ।
बिहारविद्यान्वितपीठमेनं सुनीतवान् तद्धितसाधनाय ॥१४९॥

*तदर्थं भवननिर्माणम्—*

तन्मध्यवर्त्ती लसितो हि विद्यापीठः प्रसिद्धः परमः सुपूतः ।
तद्धामनिर्माणविधौ तदानीं राजेन्द्रजीवः स्वरुचिं व्यनैषीत् ॥१५०॥

*खादीप्रचारः—*

खादीप्रचारार्थमसौ प्रवृत्तः श्रीदेशरत्नं समभूत्तदानीम् ।
विदेशिनां हानिनिदानमेतत् स्वातन्त्र्यमुत्थापयितुश्च शक्तम् ॥१५१॥
खादीप्रचारेण भवेत्सुसिद्धिः स्वातन्त्र्यहेतोर्भुवि भारतस्य ।
तस्मात् प्रचारं कृतवान् समग्रं खादीकृते सोऽयमुदारचेताः ॥१५२॥

*हिन्दूमुस्लिमयोरेकताविचारः—*

हिन्दूमुस्लिमभेदहेतुरचिरं सन्त्यज्यतां दैशिकै-
रंग्रेजीयप्रशासनेन नितरां भेदोद्गमो दृश्यते ।
देशेऽस्मिन् सुखसिद्धिदं सुनियतं स्वातन्त्र्यमाप्तुं परं
हिन्दूमुस्लिममित्रता सुखकरीतीत्थं विचारोऽस्य सन् ॥१५३॥

*पत्रप्रकाशने यत्नः—*

आस्ते सौम्यं 'सर्चलाईट' नाम स्वातन्त्र्यार्थं ख्यातपत्रं यदत्र ।
एवं पत्रं 'देश' - संज्ञं यदासीत् तन्निर्माणे देशरत्नस्य यत्नः ॥१५४॥

*नगरपालिकाध्यक्षता—*

सौम्या पाटलिपुत्रपत्तनगता संस्था परिष्कारिणी
तत्राध्यक्षपदे नियुक्त इह यो निर्वाचनेनाभवत् ।
सर्वेषां प्रियतामवाप्य कृतिभी राजेन्द्रजीवस्त्वसौ
लोकक्षेमविधौ प्रयत्नमनिशं कुर्वन्त्समासीत्तदा ॥१५५॥

*विदेशयात्रा—*

एको भूमिधनाय युद्धमतनोत्तीक्ष्णन्तदा वादिभि-
स्तद् युद्धन्तु गतं विनिर्णयकृते न्यायालये लन्दने ।
तेनासौ प्रहितस्तदा सुमतिमान् राजेन्द्रनामा कृती
प्रापल्लन्दनमेत्य निर्णयपतेर्युक्ति-प्रवादे यशः ॥१५६॥

*विदेशादागत्य देशकार्येण कारावासः—*

ततः समागत्य च देशकार्ये नानाविधे लग्न इहाभवत् सः ।
स्वार्थानुबद्धेन तदैव राज्ञा दुर्बन्धनेनैष कृतो विबद्धः ॥१५७॥

*बन्धनस्थितौ ग्रंथनिर्मितिः—*

अङ्ग्रेजानां चलति दमने क्रान्तियज्ञस्य नेता
सत्याहिंसारतिरिह तदाऽऽसादयद् बन्धनानि ।
शापञ्चैनं वरमिव ततो ग्रन्थनिर्माणतोऽधात्
पुष्पायन्ते चतुरकृतिनां कण्टकानीह नूनम् ॥१५८॥

कारावासे यातना—

प्राप्तकांग्रेससंस्थाया बहुमाने पदे स्थितः ।
आंग्लकालेऽनेकधाऽसौ कारागारस्य यातनाम् ॥१५६॥

असहयोगान्दोलनतः क्रान्तिवृद्धिः—

आन्दोलनं योऽसहयोगसंज्ञं व्यधात्तदानीं सह गान्धिनाऽत्र ।
प्रशासका रुष्टिमिता यतो हि क्रान्तिः सुतीक्ष्णा समवर्द्धताशु ॥१६०॥

गान्धिवादप्रचारः—

महात्मनो गान्धिमहोदयस्य व्रतं सुधर्म्यं परिपालयन्तसः ।
सत्यं सुपुण्यं महतीमहिंसां प्रचारयन् राजति सम्यगत्र ॥१६१॥

गान्धीजीवमतानुसारमिह यो देशस्य हेतोस्तदा
कांग्रेसस्य समृद्धये जनहितं कार्यञ्च कुर्वन्नसौ ।
स्वार्थं स्वं प्रविहाय दुस्सहतराद् गौराङ्गसंघर्षतः
श्रीमान् राष्ट्रपतिस्तु सद्गुणगणः कष्टान्वितोऽभूत्परम् ॥१६२॥

अयं सुधीरः स्वगुणैरनेकैः कांग्रेसिनां सद्धृदयेष्वविक्षत् ।
अद्यापि सर्वप्रियतां बिभर्त्ति नेतृप्रधानत्वमुपेत्य सैषः ॥१६३॥

अस्मात् कांग्रेसिनामाशा—

आदर्शसेवां प्रसमीक्ष्य तस्य कांग्रेसिनस्तत्समितावबोचन् ।
राजेन्द्रबाबूरयमेव देशं विदेशिहस्तात् परिमोचयिष्यति ॥१६४॥

देशरत्नत्वम्—

ततस्तु लब्धं किल देशरत्नं पदं परं योग्यतमेन तेन ।
रामाग्निकोव्यङ्कितसम्मितैस्तैर्जनैर्वृते भारतवर्षदेशे ॥१६५॥

*प्रान्तीयकांग्रेसाध्यक्षता—*

प्रान्तीयकांग्रेसमहासमित्यां सदस्यसंघैरनुमोद्यमानः ।
शश्वत्तदध्यक्षपदे नियुक्तः सोऽयं समासीन्मतिमान्प्रशस्तः ॥१६६॥

*विदेशिमुक्त्यै सत्पथप्रदर्शनम्—*

विदेशिमुक्त्यै जटिला परिस्थितिर्यदा यदाऽभूदिह नेतृसंघे ।
तदा तदाऽसौ समितेः सदस्यानतूतुपत् सत्पथदर्शनेन ॥१६७॥

*कांग्रेसमहासभाध्यक्षता—*

अवाप्तवान् यः प्रियतां महात्मनः श्रीगान्धिनः पूज्यतमस्य लोके ।
अतो हि कांग्रेसमहासभायां सभापतित्वं परिलब्धवान् सः ॥१६८॥

यथा सुमेरुः प्रवरो नगानां कांग्रेसिनां मध्यगतो गरिष्ठः ।
सभापतिष्ठः सुधियां वरिष्ठो राजेन्द्र आभाति च सुप्रतिष्ठः ॥१६९॥

आनन्दयद् गान्धिमहोदयन्तं विधाननीतिं परिदर्शयन् सः ।
ततो हि कांग्रेसमहासभायामशोभतासौमतिमान् वरेण्यः ॥१७०॥

*सदाकताश्रमे देशरत्नस्य विशिष्टता—*

ऋषिः पुरा वने यथा वसँस्तपोभिरावृतः
चकार लोकभावुकं तथाऽऽश्रमे सदाकते ।—
शुभाम्रकुञ्जभासिते सुखं निवासमाश्रय-
न्नभूत्तदा तु देशरत्नमत्र राष्ट्रवृद्धिकृत् ॥१७१॥

कार्यन्तद्रचनात्मकन्तु कृतवान् देशाय गर्वास्पद-
न्तस्मिन्नाश्रम एव वासमनिशं कुर्वन् जनारञ्जनम् ।
लोकानां प्रियतामसावुपगतः श्रीगान्धिनश्चान्वहम्
प्रीत्यादेशसुसेवया समभवत् कांग्रेससंस्थाधिपः ॥१७२॥

*ऋषिसमत्वन्तत्र—*

वाय्वाहारा विगतकलुषास्तत्तपो दुस्सहन्ते
कुर्वन्तो ये निवसनमगुर्ब्रह्मविज्ञा वनान्ते ।
राष्ट्रेशोऽसावसदिह तथा सन्महर्षित्वमाप्तो-
लोकोत्थाने कृतमतिरभूदाश्रमेऽस्मिँस्तदानीम् ॥१७३॥

*गान्धनश्चरखायामस्य भक्तिः—*

तीक्ष्णं सत्परशुं रिपोर्भयकरं श्रीजामदग्निर्दधौ
रामः शस्त्रभृतां वरो धृतधनुर्बाणो यथा संयुगे ।
कृष्णश्चक्रसुदर्शनाञ्चितकरो बुद्धो दयासंवृतो-
गान्धीजीत्रमहोदयस्तु धृतवाँश्चर्खास्त्रमेवन्तदा ॥१७४॥

*प्रत्यहं चर्खाचालनम्—*

ब्राह्मे मुहूर्त्ते परिवीतनिद्रो हरिं स्मरन् विश्वपतिं सुभक्त्या ।
सूर्योदये चालयतीह नित्यं चर्खामसौ गान्धिमतैकनिष्ठः ॥१७५॥

*अस्यापूर्वचमत्कृत्यादयो गुणाः—*

पुरा तु कांग्रेसमहासमित्यां श्रीगान्धिजीवस्य मतप्रसिद्ध्यै ।
चमत्कृतिं काञ्चिदपूर्वरूपां प्रादर्शयद् देशहिताय चायम् ॥१७६॥

साभापत्यं समासाद्य कतिवारं मनीषिणा ।
अनेन जननेतृत्वे मेधासिद्धिः प्रदर्शिता ॥१७७॥

छाया वटस्य प्रददाति शीतं यथा हि घर्मातिशयावृताय ।
व्यग्राय लोकाय तथैव तोषं वितीर्य धीरोऽत्र विराजतेऽसौ ॥१७८॥

विहारप्रान्तोऽयं तव विमलकीर्त्याऽतिगुरुता-
मगाद् भव्यं दिव्यं प्रथितमहिमानञ्च विपुलम् ।
तदुच्चं नेतृत्वं सकलजनचेतःसुखकरं
त्वदीयं मन्यन्ते विधिगतिपु विज्ञाः सुनियतम् ॥१७९॥

यदा प्रान्तोऽयं प्राक् परमगहनेऽन्धे तमसि सन्
समासीदज्ञाने पतित इह लोके विगणितः ।
तदा सूर्यालोकः प्रथित इव सोऽयं परिगतः
स्वधाम्ना देशस्य प्रमुखमिह रत्नं हि विलसत् ॥१८०॥

स्मृतिर्दिव्या ज्ञानं विमलमतिसत्येन सहितं
सुतीव्रा मेधाऽस्य प्रवरविदुषो राजतितराम् ।
महत्त्वाकाङ्क्षाभृद् गुणगणगरिष्ठोऽतिमहिमा
सदा लोकामोदी नयगतिविधिं सोऽत्र भजते ॥१८१॥

डॉक्टरोपाधिः—

विशिष्टवैदुष्यमवेक्ष्य विश्वविद्यालया डॉक्टरसंज्ञमानम् ।
अस्मै महार्घ्याय विपश्चिते द्राग् दत्त्वा महत्त्वेन सुखं समञ्चन् ॥१८२॥

विद्यादानपरायणाः सुविदिता ये विश्वविद्यालया
मानोपाधिमदुः पुरा मतिमते तं डॉक्टरेतिस्मृतम् ।
शिक्षाशीलसुशोभिताय महते राजेन्द्रदेवाय ते
तस्माद् गौरवमाकलय्य सततं ख्यातास्चिरं भारते ॥१८३॥

*संस्कृतसमितौ दीक्षान्तभाषणम्—*

आमन्त्रितो मैथिलभूसुरेण राजाधिराजेन महीयसा सः ।
व्याख्यानमालागतभाषणाय समागतोऽभूदिह तत्समित्याम् ॥१८४॥

सोऽयं समित्यामिह संस्कृतस्य दीक्षान्तकाले सुमहोत्सवे तत् ।
दीक्षान्तसद्भाषणमद्भुतं प्राक् पाण्डित्यपूर्णं कृतवान् मनीषी ॥१८५॥

*संस्कृताध्ययनं नाम ग्रन्थः—*

तद् भाषणं संस्कृतवर्द्धनाय ग्रन्थस्य रूपं भजते त्वपूर्वम् ।
यत्संस्कृतस्याध्ययनं निबन्धो हिन्दीगिरा मञ्जुलतां दधाति ॥१८६॥

*बहुत्र विश्वविद्यालयेषु भाषणम्—*

एवं महामतिमताऽत्र बहुत्र विश्वविद्यालयेषु
विहितानि सुभाषणानि ।
दीक्षान्तपर्वसु यशांसि विभासयन्ति तानीह तस्य
किल कोविदरञ्जनानि ॥१८७॥

*आत्मकथादिग्रन्थरचना—*

ग्रन्थाननेकान् विरचय्य सोऽयं लब्धप्रतिष्ठो विदुषां पुरस्तात् ।
स्ववृत्तमुट्टङ्कितवान् समग्रं सत्पुस्तिकामात्मकथां प्रणीय ॥१८८॥

स 'इण्डिया डिवाइडेड'-नामकं हि पुस्तकं
सदाकृताश्रमेऽलिखत् मतिज्ञ एष सत्तमः ।
तदीयपुस्तकं महत् प्रियं सुमन्यते बुधैः
सदाऽऽदरेण दृश्यते स्वतन्त्रभारते वरे ॥१८९॥

*वैदेशिकानां निष्कासनाय दृढ़ता—*

कारागारमनेकधाऽऽप्य विपुलं दुःखं समासाद्य यो-
न स्वातन्त्र्यकरीं स्ववृत्तिमजहाद् देशस्य हेतोस्तदा ।
तन्निष्ठामतुलां स्वदेशहितदां संवीक्ष्य वैदेशिका-
स्त्यक्तुं सत्वरमेव भारतमिदं ते निश्चयं प्राप्नुवन् ॥१९०॥

*आन्दोलने विजिष्णुता—*

दयासत्याहिंसाव्रतनियमनिष्ठोऽतिगरिमा
विजिष्णुः सेनानीः समभवदथान्दोलनविधौ ।
महासम्मान्योऽयं श्रुतिगतशुभज्ञानकुशलः
प्रियः श्रीराजेन्द्रो जयति जनवृन्दैरभिनुतः ॥१९१॥

*अंग्रेजानां भारतत्यागः*
*कांग्रेसहस्ते सत्ताऽऽप्तिरस्य खाद्यमन्त्रित्वञ्च—*

अंग्रेजा भारतं द्रागजहुरिह जनक्रान्तिसन्त्रस्तचित्ताः
सत्तां स्वामर्पयन्तः समदुरधिकृतिं तर्हि कांग्रेसहस्ते ।
तत्राद्यः खाद्यमन्त्री निजकृतिभिरथासादयत् सत् प्रतिष्ठां
साफल्यं याति लोको नियतिपरिवृतः प्रायशः सर्वमार्गे ॥१६२॥

*स्वतन्त्रताशुभदिनम्—*

नगयुगाङ्कशशाङ्कमितेऽब्दके
शरनिशाकरसम्मितसत्तिथौ ।
परमगस्तसुमासि स्वतन्त्रता-
शुभदिनं समगाच्चिरवाञ्छितम् ॥१६३॥

*देशस्वातन्त्र्यम्, संविधानसभाऽधिपत्वञ्च*

देशः स्वातन्त्र्यमित्वा भवितुमधिकृती सर्वतन्त्रस्वतन्त्रः
प्राक् तत्राचेष्टत द्राग् रचयितुममलं संविधानं स्वकीयम् ।
साभापत्ये वृतोऽयं तदुचितमतिभृत्सादरं तत्सभाया
वर्धिष्णोः कर्ममार्गः प्रथयति हि पुरोगामितायै प्रभुत्वम् ॥१६४॥

*अस्य सभापतित्वे संविधानग्रन्थः—*

स्वातन्त्र्ये समुपागते जनहिते भव्येऽत्र सद्भारते
सर्वेषां सुखदः प्रशासनकृते ग्रन्थो विधानात्मकः ।
पूर्णत्वं समगात् सभापतिपदे राजेन्द्रदेवे स्थिते
तत् सत्यं कथितन्तु भाग्यसुभृतां कृत्यं जगद्रञ्जनम् ॥१६५॥

*भारतस्य पूर्णस्वातन्त्र्यघोषणा—*

व्योमेषुखेटविधुसम्मित विश्रुतेऽब्दे
सौम्ये तदा जनवरीशुभमासकेऽत्र ।
तर्केऽब्धिसंख्यकतिथौ वरभारतन्तां
सद्घोषणां समतनोद् गणराज्यहेतोः ॥१६६॥

सन्त्यज्यौपनिवेशिकं पदमदः सर्वप्रभुत्वावृतं
धन्यं भारतवर्षमद्य यदहो स्वातन्त्र्यमभ्यागमत् ।
श्रीराजेन्द्रप्रसाद एप समितौ केन्द्रस्थितौ संविधे-
र्हर्षोद्दीप्तमनास्तदा समभवत्तद्घोपणायां परम् ॥१९७॥

तत्रास्य प्रथमं राष्ट्रपतिपदप्राप्तिः—

साम्राज्यं सार्वभौमं भरतभुवि शुभंशासितुं श्रेष्ठः रीत्या
जातं यत्संविधानं प्रवरमतियुतं देशरत्नं गुणाढ्यम् ।
राष्ट्रोत्थानेऽतियोग्यं सुनिपुणमिह तच्छासकन्तं हि मत्वा
दत्वाऽस्मै राष्ट्रपत्वं सुफलितमतुलं संभवत्यद्य सौम्यम् ॥१९८॥

सर्वश्रेष्ठपदं विभाति यदिदं स्वातन्त्र्यकालेऽधुना
सद्धाम्नस्तपसो धियश्च सुबलैर्लोकानुरागैस्तथा ।
सर्वादौ जनताहिताय जगति ख्यात्यै स्वदेशस्य तत्
प्रापद् राष्ट्रपतेः पदं परमसौ राजेन्द्रनामा सुधीः ॥१९९॥

ततो जनमतैर्वारद्वयमस्य राष्ट्रपतित्वम्—

खिष्टाब्दे भुजबाणखेटकुमुदैस्तैः सम्मिते शोभने
लोकानां विपुलैर्मतैः समभवन्निर्वाचितो राष्ट्रपः ।
सोऽयं सप्तशराङ्कभूपरिमिते वर्षेऽपि निर्वाचने
राष्ट्रेशत्वपदाप्तये जनमतान्यापत् सुपूर्णं जयी ॥२००॥

राष्ट्रपत्वे निरन्तरता—

न विरामोऽस्य कदाचित् समभूद्राष्ट्रपपदे यत्र ।
आरम्भतोऽत्र विलसन् राष्ट्रोन्नयने य आसक्तः ॥२०१॥

*हिन्दीं राष्ट्रभाषां कर्त्तुं समुद्योगः—*

हिन्दी राष्ट्रस्य भाषा प्रभवतु नियतं भारते भव्यदेशे
कार्यं सर्वं विधातुं प्रवरमतमदादेष हिन्दीनिबद्धम्।
तस्माद्राज्येषु हिन्दी प्रचरति सुतरां स्थानलब्ध्यै क्रमेण
स्वाधीनो देश एवं समुचितमयते राष्ट्रभाषाप्रचारम् ॥२०२॥

*विश्वशान्त्यादिस्थापनाय तत्परता—*

विश्वेऽस्मिन्नतुला सुशान्तिरनिशं सर्वत्र बोभूयतां
युद्धन्मास्तु कदाऽपि हिंसकमनोवृत्तिश्च लीना द्रुतम्।
ऊनं क्वापि न बाधतामविरतं राज्याधिकारेऽधिक-
इत्थं शीलविचारकार्यनिरतो राजेन्द्रदेवस्त्वहो ॥२०३॥

*स्वातन्त्र्यं दृढ़ीकर्त्तुं यत्नः—*

स्वदेशे स्वातन्त्र्यं द्रढयितुमसौ यत्नमनिशम्
प्रकुर्वँल्लोकानां सकलसुखदं कार्यमपि च।
चिरं शान्तिस्तिष्ठेन्नहि भवतु युद्धं क्वचिदपि
तदर्थं सच्चेष्टान्तनयति महोदारचरितः ॥२०४॥

*स्वाधीनतायामस्य श्रेयः—*

शस्त्रक्रान्तिमपास्य भारतमथाहिंसाऽस्त्रसत्याग्रहैः
स्वातन्त्र्यं समुपागमज्जनहितं भाग्योदयोऽयं महान्।
देशः सैष उपेयिवान् बहु सुखं यत्पारतन्त्र्ये हतं
तच्छ्रेयोऽस्य महीयसो भुवि तले संस्थास्यते सर्वदा ॥२०५॥

*स्वभावसिद्धकार्यम्—*

नयति धर्मपथे जनताः स्वयं श्रयति चार्त्तजनान् कृपयाऽनिशम् ।
भजति दीनदयां हरिभक्तिदां जयति सोऽयमुदग्रपराक्रमः ॥२०६॥

जनसुकार्यपरः प्रियवागसौ नयविधिज्ञनुतः सुधियां वरः ।
जगति सौम्यगुणेन यशोधनो विजयते विनयावनतो मुदा ॥२०७॥

*नीतिज्ञतादि—*

स्वाधीनेन नयेन यो गुरुसमो नीतिज्ञवर्य्यः स्तुतो-
राष्ट्राणां भुवि मित्रताऽऽप्तिचयने साफल्यमञ्चन्नवम् ।
सोऽयं सौम्यमना महागुणनिधिर्लोकोन्नतौ संरतः
श्रीमद्राष्ट्रपतिः सदा विजयते देशस्य रत्नं चितौ ॥२०८॥

*संस्कृतिसंरक्षणम्—*

उचितकृतिभिरित्थं संस्कृतिं भारतीयां
निचितशुचिविचारः पालयन्प्रैति तृप्तिम् ।
अयममितगुणौघैर्भासमानो वरीयान्
जगति जननमस्यो भाति राजेन्द्रदेवः ॥२०९॥

*लोकहितकृत्यम्—*

विशिष्टविद्याव्रतिनस्तपस्विनः श्रीदेशरत्नस्य महत्त्वपूर्णम् ।
कार्यं समस्तं भवतीह सत्यं लोकोपकाराय विवेकयुक्तम् ॥२१०॥

प्रतापिनो राष्ट्रपतेरमुष्य धर्मात्मनो देशहिताय कार्यम् ।
अनारतं क्षेमकरं समग्रं सञ्जायते लोकशुभावहन्तत् ॥२११॥

*शान्तिनीतौ भारतस्य जगद्गुरुत्वम्—*

प्रधानमासीदिह भारतं सद्विद्यासु धर्मेषु नवाऽद्य सिद्धिः ।
गुरुत्वमभ्येति हि शान्तिहेतोः स्वाधीननीतौ जगतः सुखेन ॥२१२॥

*अस्य सहिष्णुतायां हेतुः—*

सेवावृत्तिं लोकवृत्तिं दधाना गेहे चान्तश्चालितं कृत्यजातम् ।
शान्तस्वान्ता यद् बभारास्य माता क्षान्तिस्तस्मादस्य सर्वंसहेव ॥२१३॥

*जननीजनकयोः पुण्यफलम्—*

धन्या सा जननी बभूव परमा यस्याः सुतः साम्प्रतं
राष्ट्राध्यक्षपदे विभाति तदिदं पुण्यं जनन्या इह ।
एवं तज्जनकस्य पुण्यनिचयैर्योग्यात्मजोऽयं महान्
कौशल्याऽवधनाथयोरिव सुतो रामो महापूरुषः ॥२१४॥

*धर्मसंरक्षणरुचिः—*

अस्मिन् नास्तिकवादसङ्कुलदिने पाखण्डपुञ्जावृते
धर्मध्वंसपथस्थिते बहुजने गोवंशनाशास्पदे ।
नारीधर्मनिकृन्तने नवविधौ हाहेतिनादे सतां
श्रीराजेन्द्रप्रसाद एव सततं धर्मान् सुरक्षन् स्थितः ॥२१५॥

*श्रीसोमनाथप्रतिष्ठा—*

सौराष्ट्रे शिवमन्दिरं विलसितं श्रीसोमनाथस्य यद्
रत्नाद्यै रचितं जहार गजनीमोहम्मदस्तद् बलैः ।
भूयो नूतनमन्दिरे विरचिते तं सोमनाथं शिवं
संस्थाप्यार्यविशिष्टधर्ममुचितं श्रीराष्ट्रपोऽपालयत् ॥२१६॥

*देवविद्वत्पूजनम्—*

काश्यां तीर्थे शंकरं विश्वनाथं देवानन्याँश्चापि भक्त्या प्रपूज्य ।
अध्याप्यार्यो पद्धतिं गाहमानो धर्मं श्रौतं रक्षति स्वीयमत्र ॥२१७॥

इषुभुजाद्रिमितान् प्रवरान् द्विजान्
विविधशास्त्रमहार्णवपारगान् ।
विपुलपुण्यदकाशिक - पण्डितान्
बत ! धनेन समर्चितवानसौ ॥२१८॥

*प्राचामाचारपालनम्—*

यो धर्मं भजते सनातनमिमं देवाँश्च भक्त्याऽन्वहम्
अर्चन्नात्मविदां प्रियोऽतिनिरतो गोविप्रपूजासु यः ।
पूर्वस्मिन् समये यथा नृपगणा गोविप्ररक्षापरा
आसंस्तत्र दिने तथैव हितकृद्राजेन्द्रजीवस्त्वसौ ॥२१९॥

पञ्चोपचारेण सदा सभक्तिर्देवान् समभ्यर्च्य प्रभात एषः ।
कृत्वा स्तुतिं श्रीपरमेश्वरस्य कार्यालयं गच्छति भारतेशः ॥२२०॥

तीर्थानां प्रतिवत्सरं प्रकुरुते सन्दर्शनं प्रायशो-
देवाँस्तत्र सुपूज्य चाश्रितजनाँस्तत्रत्यगान् वाडवान् ।
सन्तोष्योचितवित्तदानविधिना पश्यँस्थलं पुण्यदं
धर्मं वर्धयते सनातनमिमं राजेन्द्रदेवो मुदा ॥२२१॥

*देशसेवा कीर्त्तिश्च—*

अमुष्य देशव्रतिनो मनीषिणो यशांसि भूमण्डलदीप्तिमागमन् ।
यदस्य सेवा परतन्त्रतापहा स्वतन्त्रतामाप्तवतीह भारते ॥२२२॥

तस्यैव राजेन्द्रप्रसादनाम्नो देशानुरक्तस्य नयैर्महोग्रैः ।
विभ्राजते भारतवर्षमेत्य स्वतन्त्रतान्ताञ्चिरकालस्तुप्ताम् ।।२२३।।
एवं स्वदेशोन्नतितत्परस्य सत्त्यागमूर्त्तेस्तपसा सुयुक्त्या ।
अखण्डभूमण्डलराज्यमध्ये विद्योतते भारतवर्षमद्य ।।२२४।।

*विहारसंस्कृतसमितिः—*

आस्तेऽत्र सौम्यसमितिः किल संस्कृतस्य
प्रान्ते तु राज्यरचिता महिता महद्भिः ।
तस्यां विभाति परिषद् वरसंस्कृतस्य
सर्वोच्चपण्डितजनैरधिसंश्रिता या ।।२२५।।

*मुजफ्फरपुरे संस्कृतपरिषदि विद्यामार्त्तण्डो-पाधिप्रदानाय मत्कृतः प्रस्तावः—*

श्रीलं राजेन्द्रदेवं समुदितधिषणं राष्ट्रपं सद्गुणाढ्यं
'विद्यामार्त्तण्ड' नाम्नाऽऽद्दतुमिह समितावुत्तमोपाधिना द्राक् ।
तत्राहं तद्गुणार्चीं समितिपरिषदः सत्सदस्यः सभायां
प्रस्तावं मानपूर्णं सुरुचिरममलन्त्वानयम्मोदमानः ।।२२६।।

*महाराजाधिराजस्य साभापत्ये सदस्यैः प्रस्तावानुमोदनम्—*

ततः सभाध्यक्षमहोदयः श्रीकामेश्वरो मैथिलभूसुरेशः ।
स्वीकृत्य प्रस्तावमिमं सदस्यैः सहैव हर्षं तुमुलं व्यतानीत् ।।२२७।।

*तत्सम्पादनाय प्रयासः—*

'विद्यामार्त्तण्ड' संज्ञं बुधजनमहितं पण्डितानां समित्यां
मानोपाधिं प्रदातुं सुविशदमतये देशरत्नाय तस्मै ।
शास्त्रीयज्ञानपुञ्जं स्वहृदि कलयते श्रीलराजेन्द्रनाम्ने
यत्नाधायी तदत्राभवमतिरुचिभृत् संस्कृतोत्थानकामः ।।२२८।।

ममेप्सितेऽर्थे समुपाधिदाने श्रीराष्ट्रपायात्र महामहिम्ने ।
कृतप्रयत्नास्त्वभवञ्जना ये नामानि तेषामिह वच्मि वृत्तैः ॥२२९॥

*अत्र राज्यपालदिवाकरकृतो यत्नः—*

महामान्यः श्रीमान् निखिलगुणपूर्णोऽतिगरिमा
सदा विद्याप्रेमप्रथित - बहुकीर्त्तिद्युतिधृतः ।
प्रदातुं राज्येशः सहमत इहाभूद् धृतमना
अमुं विद्योपाधिं शुभगुणभृते राष्ट्रपतये ॥२३०॥

उपाधिन्तमङ्गीप्रकर्तुं हि मत्वाऽऽग्रहं राज्यपालो ममासौ महीयान् ।
अतुष्यत् स्वपत्रं लिखित्वा तदानीं सुधी रङ्गनाथः पुरो राष्ट्रपस्य ॥२३१॥

*एतदर्थं शिक्षामन्त्रिणोऽभिरुचिः—*

महाप्राज्ञो मान्यो नयगतिविधिज्ञोऽतिसुयशा
असौ शिक्षामन्त्री बुधजनहृदामन्दजनकः ।
महाराजेन्द्रायाप्रमितमतये राष्ट्रपतये
गुणोपाधेर्दाने प्रयतितमनाः सोऽभवदिह ॥२३२॥

विद्यासंवर्द्धनार्थाय श्रीमाँस्तत्र व्यराजत ।
बदरीनाथवर्माऽयमाचार्यो मतिमान् मुदा ॥२३३॥

*सचिवादयोऽन्ये सहकृतः*

विद्याकलावृद्धिविधौ सयत्नः स माथुरः श्रीजगदीशचन्द्रः ।
शिक्षाविभागे सचिवो वरेण्यो न्ययोजयत् स्वां रुचिमत्र कृत्ये ॥२३४॥

विहारस्य शिक्षाविनिर्देशकः श्रीकिशोरीप्रसादो मनीषी व्यदीव्यत् ।
प्रकुर्वन् सुयत्नं समुच्चं तदर्थं विशिष्टस्य दीक्षान्तहेतोस्तदानीम् ॥२३५॥

आस्ते हि विद्वान् परमः सुयोग्यो मन्त्री समित्या इह संस्कृतस्य ।
पूर्णं प्रयत्नं कृतवाँस्तदर्थं विद्याधनो वीरमणिप्रसादः ॥२३६॥

शर्मेत्युपाधिको रामपदार्थः सन्मना बुधः ।
उपमन्त्री समित्या यः सयत्नोऽभून्मुदाऽन्वितः ॥२३७॥

*दीक्षान्तोत्सवे राष्ट्रपतये विद्यामार्त्तण्डोपाधिसमर्पणम्—*

फलन्तदीयं समितेस्तदानीं विशिष्टदीक्षान्तमहोत्सवे यत् ।
राष्ट्रेशराजेन्द्रप्रसाद एष सम्मानितोऽभूत्तदुपाधिनाऽत्र ॥२३८॥

विद्यामार्त्तण्डनामानमुपाधिं प्राप्तवाँस्ततः ।
विहारे संस्कृतस्यास्याः परिषत्तो महायशाः ॥२३९॥

*तत्कृते मिथिलेशाध्यक्षत्वे विशिष्टदीक्षान्तोत्सवः—*

दीक्षान्तोत्सवसंविधेरवसरे दूरात्समेता बुधाः
श्रेष्ठा नागरिका जनाश्च बहवो राज्याधिकारे स्थिताः ।
मान्या न्यायगृहाधिपाः सुमतयः सन्मन्त्रिणो राज्यपा
अध्यक्षो मिथिलेश्वरश्च समितेरासन् सदस्यास्तथा ॥२४०॥

*तत्र राज्यपालकृतदीक्षान्तभाषणम्—*

तस्मिन् महोत्सवविधावति - कीर्त्तिशाली
सद्राज्यपालसुपदं भजमान एषः ।
विद्वान् दिवाकरमहाशयरङ्गनाथो-
दीक्षान्त - भाषणमकुर्वत सिद्धशिष्टम् ॥२४१॥

*अस्य गोरक्षणे विचारः—*

न केवलं धार्मिक-दृष्टिकोणैर्विज्ञानदृष्ट्या च समानरीत्या ।
गवां वधः क्वापि न सम्मतोऽस्ति राजेन्द्रजीवस्य विचार एषः ॥२४२॥

गोवंश एवास्ति धनं प्रमुख्यमतो हि गोवंश इहातिरक्ष्यः ।
यस्य प्रसादैर्दधिदुग्धमाज्यम् पीयूषमेवास्ति जगद्धिताय ॥२४३॥

यथा मातरः पालयन्तीह पुत्राँस्तथा दुग्धदानैः सुरक्षन्ति गावः ।
अतो मानवा मातृरूपेण गास्ता विजानन्ति चेत्तर्हि नो गोवधोऽस्ति ॥२४४॥

यथा विदेशे बहुधेनुपालनङ्कुर्वन्ति सद्भावनया तु मानवाः ।
भोज्यानि वस्तूनि सुपोषणाय तथाऽर्पयन्तीह न केऽपि पालकाः ॥२४५॥

*विद्याकलायन्त्रकृषिकर्मादीनां प्रगतिः—*

विद्यानामभिवृद्धयेऽत्र सततं नानाकलानां कृते
यन्त्राणां कृषिकर्मणाश्च विषये तत्त्वानुसन्धानकम् ।
राष्ट्रस्य प्रतिरक्षणाय प्रगतिर्नाजायतेऽनेकधा
लोकोत्थानकरं चलत्यविरतं कार्यन्तु राष्ट्रेऽधुना ॥२४६॥

*रूसादिदेशमैत्री—*

अस्यैव राजेन्द्रमहाशयस्य सच्छासनस्यावसरेऽद्य देशः ।
रूसादिदेशैः सहयोगभावं प्रापत् परं विस्मयदं परेषाम् ॥२४७॥

ये भारते नहि कदाऽपि समागताः प्राक्
ते तिब्बतात् सुविदिताद्वररूसदेशात् ।
श्रेष्ठाच्च चीनविषयादिह कीर्त्तिमन्तः
शास्तार एत्य सुहृदोऽद्य भवन्ति चित्रम् ॥२४८॥

युद्धप्रतिरोधः—

श्रीमद्राजेन्द्रजीवे स्तुतभरतभुवो राष्ट्रपे द्योतमाने
दौर्भाग्यं निर्गतं द्राक् शुभदिनमुदितं देशसौख्याय शश्वत् ।
धर्मैर्न्यायैश्च सत्यैरविरतमिह यद् भारतं प्रोन्नतं सद्
युद्धोत्थानाय दीप्तान् प्रतिपदमधिकं वारयत्यद्य सर्वान् ॥२४६॥

आणविकास्त्रापवर्जनम्—

लोकध्वंसविधायकाणुरचितं विस्फोटकं भीषणं
नो कोऽपि प्रहरेदतः प्रयतते श्रीदेशरत्नं परम् ।
शान्तिस्थापनहेतवे कृतमनाः सन्मार्गमुद्बोधयन्
हिंसावृत्तिमपासयँश्च भुवने विभ्राजते नित्यशः ॥२५०॥

पञ्चशीलम्—

अस्यैव राजेन्द्रमहोदयस्य
साम्राज्यकाले समभूदपूर्वा ।
विश्वेष्वपूर्वं पदमादधाना
सा पञ्चशीलाख्यसुयोजनाऽत्र ॥२५१॥

पञ्चशीलपरिचयः—

एकेन राष्ट्रेण परं हि राष्ट्रं सम्मानतो वर्तयितुं यतेत ।
पञ्च-प्रमाणेषु जगत्सुखाय शीलेषु भाति प्रथमस्थलेऽदः ॥२५२

सिद्धान्तभेदेष्वपि सत्सु कोऽपि कस्यापि नीतौ नहि शासनस्य ।
हस्तं क्षिपेदित्थमुदात्तरूपा तटस्थता, शीलमिदं द्वितीयम् ॥२५३॥

अहिंसात्मकभावेन देशाः सर्वे परस्परम् ।
प्रवर्त्तन्तां तृतीयं हि शीलं सर्वहितावहम् ॥२५४॥

राष्ट्रेषु सर्वेषु समानतार्थं परस्परं प्रेम-विवृद्धिहेतोः ।
शीलं चतुर्थं, सहजीवनश्च सुशान्तिपूर्णं किल पञ्चमन्तत् ॥२५५॥

*पञ्चशीलस्यापूर्वत्वम्—*

समस्तभूमण्डलराज्यनीती-
विंदन्ति ये तानिह पञ्चशीलम् ।
सविस्मयान् द्राक् कुरुते विमर्शे
परन्त्वपूर्वं कथयन्ति सर्वे ॥२५६॥

*पञ्चवर्षीययोजनाचर्चा—*

अस्यैव काले प्रथमा द्वितीया सा पञ्चवर्षीयसुयोजनाऽऽस्ते ।
राष्ट्रोन्नतौ या प्रमुखं निदानं यतोऽस्ति देशस्य दिगन्तकीर्त्तिः ॥२५७॥

उत्थानकार्याण्यखिलानि यानि चलन्ति देशे चिरसौख्यदानि ।
सम्मुक्तयोर्योजनयोस्तयोस्तु सञ्चालनार्थन्निहितानि सन्ति ॥२५८॥

*तत्रानुसन्धानादि—*

अनुसन्धानकार्याणि ज्ञानविज्ञानवृद्धये ।
भवन्ति कति राष्ट्रेऽस्मिन् स्वातन्त्र्ये समुपागते ॥२५९॥

*विकासादिकार्यम्—*

सज्ज्ञानविज्ञानकलाकृपीणां विद्युत्समुद्योगविकासकानाम् ।
समुन्नती राष्ट्रपतेरमुष्य प्रशासने भाति सुभारतेऽद्य ॥२६०॥

*भाखरानाङ्गल-हीराकुडादिबन्धाः—*

भाखरानाङ्गलेत्याख्यो बन्धः पञ्चनदे स्थितः ।
प्रगतिं भारतीयां यो निदर्शयति सर्वतः ॥२६१॥

हीराकुडाख्या प्रथिता तुङ्गभद्रा च योजना ।
विकासिकाऽस्य देशस्य समृद्ध्यै वर्द्धते भृशम् ॥२६२॥

दामोदराख्या प्रथिता तथाऽत्र कोशीसमाख्या वरयोजनेयम् ।
लोकोपकाराय च देशपुष्ट्यै निर्माणमायाति प्रशासनेऽस्य ॥२६३॥

*जलवीथी-विद्युदापूर्त्तिश्च—*

जलस्य वीथी च विकासहेतोः क्षेत्राणि सत्सेचयितुम्बहुत्र ।
ग्रामेष्वनेकेषु वितीर्यमाणा विद्युच्च भात्यस्य विशिष्टकाले ॥२६४॥

*चित्तरञ्जने वाष्पयाननिर्माणम्—*

यच्चित्तरञ्जनमिदं वरवाष्पयान—
निर्माणकारि किल यन्त्र-गृहं प्रशस्तम् ।
ख्यातश्चकास्ति शुभ-भारतवर्षमध्ये
यस्माद्धनं सुविपुलञ्च बहिः प्रयाति ॥२६५॥

*पेराम्बुरे वाष्पयानशकटीनिर्माणम्—*

मद्रास - पत्तन - समीपगतेऽतिरम्ये
पेराम्बुरेऽत्र वरवाष्पसुयानहेतोः ।
कोष्ठप्रकोष्ठनिचयान् रुचिरान् विरच्य
लोकान् परं सुखयुतान् प्रकरोति राष्ट्रम् ॥२६६॥

*सिन्दरी स्थले खाद निर्माणादि, बैङ्लोरे वायुयाननिर्माणञ्च—*

या सिन्दरीति विदिता त्वभियन्त्रविद्या-
ऽऽगाराय "खाद" पदवाच्यकवस्तुसृष्ट्यै ।
"बैङ्लोर" संज्ञकमिहास्ति च वायुयान-
निर्माणकेन्द्रमधुना वरशासनेऽस्य ॥२६७॥

*विशाखापत्तने जलयाननिर्मितिः—*

पोतास्तु वारिचलनार्थमिहातिरम्या
आमोददाश्च जलयानसुरूपकास्ते ।
निर्मापिता इह भवन्ति शुभे विशाखा-
युक्ते सुपत्तनवरे नवभारतेऽद्य ॥२६८॥

*मोकामागंङ्गाब्रिजनिर्मितिः—*

गङ्गादक्षिणतः क्वचित् स्थलपथो नो वाष्पयानस्य च
मार्गः सौम्यदिशि प्रयातुमिह दुःकष्टं सदाऽऽसीत्ततः ।
"मोकामाब्रिज" एष दीर्घ-प्रसृतिर्गङ्गानदीं व्याप्य यद्
निर्मीणं परमेति तज्जनहितं दृश्यं महार्थप्रदम् ॥२६९॥

शिलान्यासं यस्याप्रमितमहिमा राष्ट्रसुपतिः
मुदा कृत्वाऽवचोद् विशदजनसङ्घे स्थल इह ।
इदं कार्यं प्रोच्चं भवति सुचिरं राष्ट्रसुखदं
सुयातायातानां नियतमतिसौविध्यजनकम् ॥२७०॥

न केवलं विहाराणां सौविध्यमिह यास्यति ।
दूरस्थानां जनानाञ्च वणिजामप्यशेषतः ॥२७१॥

गङ्गापार्श्वस्थगा ये च दूरदेशेभ्य आगताः ।
सुखिनस्ते भविष्यन्ति यानैश्च स्थलसत्पथैः ॥२७२॥

*विभिन्नयान्त्रिकसंस्थानां निर्माणम्—*

लौहैः काष्ठै 'रबड़' निकरैस्ताम्रतन्तुप्रतानै-
र्विद्युद्व्रातैस्तदुदयधरैर्वाष्पशक्तिप्रसारैः ।
स्तोत्थणैस्तैलैरुपचितगुणैर्वस्तुभिर्नैकरूपै-
र्यान्त्युत्थानं जनहितकृते यन्त्रनिर्माणसंस्थाः ॥२७३॥

*वस्त्रनिर्माणाय करघा-प्रोत्साहनम्—*

दिव्यानि चेह परमं सुषुमाप्रदानि
वस्त्राणि तानि विविधानि विनिर्मितुं सद् ।
यन्त्रालयाः सुघटिताः करघात्मकास्ते
जाताः स्वतंत्र-शुभभारतराष्ट्रमध्ये ॥२७४॥

*देशीयवस्त्रव्यवहारतो हर्षः—*

अद्यास्मिन्नत्र भारते सुकरघाजातानि वस्त्राणि तु
देशीयानि सुयन्त्रजानि सुविधासंवर्धकान्यामुदा ।
लोकाः सन्दधतेऽत्र ये सुवसनं वैदेशिकं प्रागधु-
स्तस्माद्देशधनानि यान्ति न बहिस्तद्धर्षपर्यास्पदम् ॥२७५॥

*अन्यानि विकासोद्योगकार्याणि च—*

अन्यान्यनेकानि सुराष्ट्रवृद्ध्यै
विकासकार्याणि भवन्ति नित्यम् ।
उद्योगकर्माण्यपि भारतेऽद्य
चलन्ति सम्यग् जन-सौख्यहेतोः ॥२७६॥

*वैदेशिकौषधनिर्माणतः स्वदेशधनरक्षणम्—*

विदेशतः समागमन् पुरा तु भेषजान्यतः
वसुव्ययोऽधिकोऽभवत्तदौषधागमाय सः ।
स्वतन्त्रभारतेऽद्य तद् बहुत्र सच्चिकित्सका—
महौषधानि निर्मितुं रतास्ततोऽर्थरक्षणम् ॥२७७॥

*औषधनिर्माणतो देशतुष्टिः—*

निर्माणशाला बहुधा भैषज्यानां समुद्गता ।
प्रोन्नतिः प्रतिभात्याभिः संस्थाभिर्लोकतोषिणी ॥२७८॥

*आयुर्वेदाद्युन्नतिः—*

रोगार्त्तान् सुखिनः कर्त्तुं प्रभवत्यद्य भारते ।
आयुर्वेदाद्यनेकस्य विज्ञानस्य परोन्नतिः ॥२७९॥

*संक्रामकादिरोगनिवृत्त्यै सदुपायः—*

संक्रामकान्नाशयितुं हि रोगान् नानाविधान् सामयिकामयाँश्च ।
निदानभैषज्यचिकित्सकानां प्रबन्धबाहुल्यमिहाद्य भाति ॥२८०॥

*अनावृष्ट्यादावन्नवस्त्रादिप्रबन्धः—*

अवृष्टिदुर्भिक्षजलाप्लवाद्यैरुपद्रवैरत्र यदा प्रपीडा ।
तदाऽस्यकाले प्रचुरान्नवस्त्रैः पुष्ट्यै प्रजानां क्रियते प्रबन्धः ॥२८१॥

*शिक्षालयविश्वविद्यालयाभिवृद्धिः—*

अनेकविद्यासु विवृद्धिहेतोः
शिक्षालया लोकहितात्मकाश्च ।
विनिर्मिता अद्य भवन्ति विश्व-
विद्यालया गौरवमादधानाः ॥२८२॥

*स्वराष्ट्रप्रतिरक्षणाय भारतस्य सर्वशक्तिसम्पन्नता—*

नवरणकलां लक्ष्यीकृत्य प्रशिक्षणमाश्रिताः
स्थल-जल-नभः सेनाः सम्प्रत्युदश्चितशक्तयः ।
अभिनव-युगं राष्ट्रं प्राणैरसूग्भिरथाचितुं
प्रहरिण इव प्रत्याशं स्वं हितं प्रति जाग्रति ॥२८३॥

*भारते श्रमजीविनां जीविकासंवर्धना—*

राष्ट्रियकरणे सरुचिर्व्यक्तिगतोद्योगसंवृद्ध्यै ।
यदुपक्रमते देशः श्रमिणां सिद्ध्यति ततो वृत्तिः ॥२८४॥

*भारतस्य प्रतिराष्ट्रं शिष्टमण्डल-विनिमयः—*

शिष्ट-मण्डलान्यन्योन्यं प्रतिराष्ट्रं यान्त्यायान्ति ।
व्यापारिकमथ सांस्कृतिकं विनिमयमुपकल्प्य च भान्ति ॥२८५॥

*प्रतिदेशं राजदूत-विनिमयः—*

प्रतिदेशं नयवन्तो नियोजिता राजदूताः स्वे ।
स्वाधीनत्व-दृशा ये देशोत्कर्षाय चेष्टन्ते ॥२८६॥

*भारतस्य विविध संघर्ष निराकरणम्—*

सामाजिकीं विषमतामार्थिकमेवञ्च वैषम्यम् ।
वर्ण-वर्ग-संघर्षाद् ऋते रतं भारतं हर्तुम् ॥२८७॥

*भारतस्य कार्येण ध्वंसकविज्ञानस्य शान्तौ प्रवर्त्तनम्—*

सभ्यत्वे पथि नेतुमुज्ज्वलतमाचारैर्विचारैर्जगद्
योऽध्यात्म-प्रतिपत्ति-पूर्वकमभूद् देशो गुरुर्दर्शने ।
अद्यत्वे "ऽणु-रिएक्टरं" जनहिते निर्माय स ध्वंसकं
विज्ञानं शुभ-वर्त्मनि प्रगमयत्येषोऽद्भुतः प्रक्रमः ॥२८८॥

*बाण्डुङ्ग-सम्मेलने भारतस्य श्रेयः—*

राष्ट्रैर्यूरोप-संस्थैरसह्यबहुदिनादेशिया-ऽफ्रीकयोर्ये
देशास्तच्छासनान्तर्जड़मतिगतयो दीनहीनाः कृतास्तु ।
मुक्ताः स्वातन्त्र्यमित्वा सपदि सम-हिता ऐक्यमाप्तुं रतास्ते
बाण्डुङ्गे चैकमञ्चे यदिह सुमिलिताः भारतन्तत्र मूलम् ॥२८९॥

*भारतस्य नीत्या 'नाटो'-प्रभृतीनां वैफल्यम्—*

नाटो - सिएटो - बगदादसन्धि —
ब्रातानि दुर्लङ्घ्य - निमित्तकानि ।
षड्यन्त्र - संरोधकृताऽस्य नीत्या
सर्वाण्यहो निष्प्रभतां प्रयान्ति ॥२९०॥

*कोरियायुद्धविरामे भारतस्य यत्नः—*

अर्धार्धं प्रविभज्य देशमपि नो ये कोरियावासिनः
शान्त्या स्थातुमपारयन् गृहरणादन्योन्यविध्वंसतः ।
चीनं रूसममेरिकामपि तदा सम्बोध्य माध्यस्थ्यकृद्
युद्धे रोधमधादमुष्य समयेऽहो भारतं स्वान्नयात् ॥२९१॥

*भारतकृत्या हिन्दचीने गृहयुद्धनिरोधः—*

हिन्दचीन इह गेह-रणे यद् जर्जरो द्विदलयान्नहि पिष्टः ।
सत्प्रभावकरसक्रिययोगोऽसौ तटस्थपरराष्ट्रनयोऽस्य ॥२९२॥

*भारतकृत्येन स्वेजमधिकर्त्तुं प्रवृत्तस्य युद्धस्यापवारणम्—*

फ्रांसश्चाथ ब्रिटेनस्तदनुगमनकृच्चेसराईल एते—
देशा 'मिस्रं' विजेतुं कृत-कुटिल-रणाः स्वेजहेतोर्यदाऽऽसन् ।
अन्यायन्तं तदोच्चैर्जनमत-रचनैर्भारतन्द्रागनिन्दद्
रूसोऽभूद् खड्ग-हस्तस्तत इह विरतं युद्धमेषाऽस्य शक्तिः ॥२९३॥

*भारत-कृतं मध्य-पूर्व देशे "शक्ति-रिक्तता" नीति-खण्डनम्—*

स्वेजे मुक्ते कुटिलमनसा मध्यपूर्वीय देशान्
हस्ते कर्त्तुं बहुविधधियाऽमेरिकास्तर्हि लग्नः ।
घुष्टां जुष्टां छल-बल-धनैः "शक्ति-रिक्तत्व"-नीतिम्
"तत्पूर्त्तिः स्यात् स्वत" इति गदद् भारतन्द्रागखण्डत् ॥२६४॥

*तटस्थस्य भारतस्य साम्राज्यवाद-साम्यवादयोर्मेलने प्रयत्नः—*

एकस्यान्दिशि लोकशोषणकरः साम्राज्यवादोऽप्रियः
सोढ़ाऽन्यस्य दलस्य नो मतमतोऽसौ साम्यवादोऽसहः ।
तत्पक्षद्वय-भिन्नमुन्नतमनो मध्यस्थमार्गं स्थितं
भिन्नौ मेलयितुं "सहस्थिति" - दशा धत्ते मतिं भारतम् ॥२६५॥

*अमेरिकादृष्टावपि भारत-गुरुता—*

चित्रं तत् किल भारतस्य नयतो दुर्लंघ्य-लाभेऽफलाः
रुष्टा अप्यनुगामितां विजहतश्चाप्यर्थ-साहाय्यकम् ।
कर्त्तुं यद् विवशा इवाद्य सबलास्तेऽमेरिका-शासकाः
तद् बीजं हि तटस्थता च गुरुता सद्भारतस्यैधते ॥२६६॥

*युद्धेऽजेयशक्तिमतो रूसस्य भारतशान्तिनीतौ प्रियता—*

शौर्य्यारण्यमहो प्रकम्पयति यो दर्पोल्वणैर्गर्जनै-
रूसे सम्प्रति कूटनीतिविषये क्रुश्चेव एषोऽग्रणीः ।
विद्युद्-यष्टिमिवास्य नीतिमधुना शान्तेः प्रपश्यन् स्पृशन्
मुग्धः संयममेति सिंह इव सा सद्भारतस्य प्रभा ॥२६७॥

*भारतस्य बलं शान्तिरेव—*

'अल्फा' न वा 'स्फुतनिकं' निक्षेपास्त्राणि नान्यानि ।
भारत-शक्ति-स्फोटो जगति सुशान्तिप्रसारोऽद्य ॥२९८॥

*जगतां शान्त्यै भारतादाशा—*

परितो द्विपताञ्जगतां भीपणरण-शंकया त्रसताम् ।
आशाकेन्द्रं शान्त्यै भारतमिह विश्वसम्मान्यम् ॥२९९॥

*विदेशिनां भारते श्रद्धा—*

हृदि विदेश-नेतॄणां भजतां सद्भावना-यात्राम् ।
एतर्हि नवं भारतमाप्नुते विश्रुतां श्रद्धाम् ॥३००॥

*हरिजनादीनामुत्थानचेष्टा—*

आदिमजात्यनुसूचितजातीनां हरिजनानाञ्च ।
वृत्तौ स्थान-सुरक्षण-नीत्या द्रढ़यति तदुत्थानम् ॥३०१॥

*श्रमिणां सौविध्याय विधि-बाहुल्यम्—*

वर्धिष्णोर्देशस्य स्तम्भो योऽसौ श्रमिक-वर्गः ।
तत्-सौविध्य-विधाने विधि-पद्धतिरेधतेऽद्धाऽत्र ॥३०२॥

*शान्ति-प्रियाणान्दलानाम्प्रगतौ निरोधाभावः—*

न शान्ति-भङ्गो यदि, नाद्य रोधो—
देशेऽत्र कस्यापि दलस्य मार्गे ।
राज्यम्प्रमाणङ्किल केरलोऽसौ
यः साम्यवाद्यप्यधिकार-धारी ॥३०३॥

*भारते जनतन्त्रस्य विशिष्टता—*

इह जनतन्त्रन्तदहो केन्द्रे राज्येषु कटु-तिक्ताम् ।
आलोचनाम्प्रसोढुं वैधङ्कर्त्तुंश्च यद् वाच्यम् ॥२०४॥

अन्नं वस्त्रं वासश्चिकित्सनं शिक्षणं यच्च ।
क्रान्तिर्विकलेष्वेषु हि तत् त्वरतेऽद्यात्रं जनतन्त्रम् ॥२०५॥

उन्नेतुञ्जन-जीवनमपेतुमार्त्तिंश्च दौर्गत्यम् ।
दक्षिण-पथेन धीरंधीरं संयाति जनतन्त्रम् ॥२०६॥

*जनाप्रियत्वे मन्त्रिणामपि साफल्याभावः—*

न केऽपि वरमन्त्रिणः सपदि ये नय-प्रोद्भटाः
पदन्निजमुपार्जितुं सफलताम्प्रयान्त्यप्रियाः ।
क्रमाद् युग-गुण-प्रभाऽऽकलनभाजि निर्वाचने
प्रबुद्धजन-चेतना नयति राजनीत्युन्मुखी ॥२०७॥

*भारतस्य कश्मीर-नीतिः—*

सत्ता-हस्तान्तरण-समये पूर्वमाङ्गल-प्रशास्त्रा
राज्यानां यो विलयन-विधिर्निश्चितः संघ-सक्त्यै ।
कश्मीरेशो हरिरपि तथा भारतेऽन्तर्न्यविक्षद्
युक्तञ्चैवं विधि-मत-दृढं भारतस्यात्र सत्त्वम् ॥२०८॥

शस्त्रबलैराक्रामत् पाकिस्तानस्तु कश्मीरम् ।
आमन्त्रितं विपत्तौ शरणम्भारतमभूत्तस्य ॥२०९॥

यद् भारतं विभक्तन्द्विधा, तदत्राङ्गल-दुर्नीतिः ।
कश्मीरे न च धर्माद् द्विराष्ट्र-सिद्धान्त आदर्यः ॥२१०॥

तेऽत्र विधान-समाया जन-निर्वाचन-मताः सभ्याः ।
अनुमोदन्ते भारतमतः पुनर्मत-कथा व्यर्था ॥३११॥

जन-मत-गणना-प्रथिता स्थिति-भेदे भङ्ग-दोषा नो ।
नौजभ्नत् कश्मीरांशं यत् पाकः शस्त्र-सन्ध्याढ्यः ॥३१२॥

पृष्ठ-पदघ्नातोऽदो भारतमात्मस्थ-कश्मीरे ।
शान्त्यर्थिं नापि युध्यत्यविधि-हृते पाक-कश्मीरे ॥३१३॥

*भारतस्य गोआ-नीतिः—*

दक्षिण-पश्चिमभागे गोआ-ड्यू-डामनाश्चात्र ।
ग्रस्तास्तु पुर्त्तगालात् पीड्यन्ते पारतन्त्र्येण ॥३१४॥

शान्तिं वक्त्याचरति च भारतमेतन्निदर्शनं गोआः ।
यत्र हि विषमसमस्यां यतते शान्त्या समाधातुम् ॥३१५॥

मुक्तिमापिता 'नगर हवेली' तज्जनि-जन-निकरेण ।
पुर्त्तगाल इतरस्थलतोऽपि च गन्ता ध्रुवमचिरेण ॥३१६॥

डलेस-क्रुन्हावक्तव्यात् पड्यन्त्राच्च विदेशिनाम् । —
प्रान्तत्वं पुर्त्तगालस्य कथं गोआ गमिष्यति ॥३१७॥

*फ्रांसस्य भारतोपनिवेश-त्यागः—*

वङ्गे चन्दन-नगरम् मद्रासे पण्डिचेरीश्च ।
युग-धर्मञ्जानानः फ्रांसोऽमुञ्चत् स्वयम्प्रेम्णा ॥३१८॥

*भारतस्य सहस्थिति-सिद्धान्त-संवर्धना—*

संयुक्तराष्ट्रसंघेऽप्यथवा परिषदि सुरक्षायाः ।
अरि-पड्यन्त्रैर्युध्यति संस्थातो भिन्नतां नैति ॥३१९॥

राष्ट्रमण्डलमुदस्तमनो यद् द्रोहकृत्स्वपि तदन्तरितेषु ।
नोज्झति प्रशमि भारतमेतत् तत् "सह-स्थिति"-समादर-वर्त्म ॥३२०॥

*भारत-निष्पक्षतायां सर्वत्र प्रत्ययः—*

निष्पक्षं भारतमिह सर्वे प्रतियन्ति यत् तस्मात् ।
युद्ध-विरामे सेना इतो गताः पर्यवेक्षन्ते ॥३२१॥

*भारते हैदराबादराज्यस्यात्मसात्करणम्—*

प्रागासीद् यद् निजामाधिकृतमिह तदा हैदराबाद-राज्यम्
तत् स्वातन्त्र्येऽभ्युपेते कुटिल-रिजविना कासिमेनापविद्धम् ।
पाक-क्षेत्रे लयार्थं घटितमथ रजाकार - सैन्यन्तु तेन
क्षिप्त्वा तत् तूल-तुल्यन्निजबल-पवनैर्भारतङ्क्रान्तिमाश्वत् ॥३२२॥

*देशीय राज्यानां भारत-संघे विलयनम्—*

देशीयानि च राजतन्त्र-कलितान्यत्रत्य राज्यानि यत्
संघे सम्मिलितानि भारत-बलन्तस्माद् महत्त्वैर्वृतम् ।
नाभूत् कस्यचिदप्यतीतसमये राजाधिराजस्य सा
या केन्द्रे सपदि प्रशासन-गतैकच्छत्र-राज्या धरा ॥३२३॥

*राष्ट्रपतेर्गुणवैलक्षण्यम्*

स्वस्ति श्रीमदसीमसद्गुणनिधिर्मान्यो वदान्यो महान्
विख्यातो भुजविक्रमैरतितरां श्लाघ्यो विधिज्ञो वरः ।
प्रेम्णा सर्वजनेषु संस्कृतिमिमां रक्षन् सतामग्रणीः
श्रीमान् राष्ट्रपतिः सदा विजयते राजेन्द्रनामा व्रती ॥३२४॥

अगुरुरपि सुवासैः सद्गुणानां सदैप
गुरुरतिमतिभाजां नीतिवर्त्मस्थितानाम् ।
भरतभुवि पदेन प्रोन्नतोऽपि प्रकाम-
मृजुतमनिजवृत्तैरानतः संविभाति ॥३२५॥

पूज्यो राष्ट्रपिता दयाऽऽर्द्रहृदयो गान्धी महात्माऽब्रवीत्
सत्यं शान्तिरहिंसनं व्रतमिदं व्याप्तं जगत्यां भवेत् ।
इत्यर्थं कृतचेतनो दृढ़मना राष्ट्रेश एषोऽन्वहं
लोकेऽस्मिन् निजसाधनैः प्रयतते मैत्र्यादिसंवर्धनैः ॥३२६॥

*अस्य कृते मत्पूज्यपितुः पण्डितवरस्य उग्रनाथ 'झा' शर्मणो ग्रहफल-विचारतः प्रशंसा—*

अस्मत्पूज्यपिता महागणितवित् सन्मैथिलो भूसुरो-
राष्ट्रेशस्य महामतेः शुभदशो राजेन्द्रनाम्नः पुरा ।
जन्माङ्गग्रहदर्शनेन सुमनाः भाग्योदयः प्रोन्नतो-
भावीत्यस्य कृते महोच्चवचसा सत्यां प्रशंसां व्यधात् ॥३२७॥

*एतस्य प्रशंसकानां केषाञ्चन विशिष्टानां देशनेतॄणां चर्चास्तत्र लोकमान्य पण्डित बालगङ्गाधर तिलकः—*

यः स्वातन्त्र्यकृते चकार प्रथमं सद्घोषणामुच्चकैः
स्वं राज्यं मम जन्मसिद्धमुचितं प्राप्योऽधिकारोऽस्ति सन् ।
तस्मात्तत्र बबन्ध शासनधरः कारालये यं पुरा
विद्वान् धर्मपरायणः स तिलकोऽभूद् बालगङ्गाधरः ॥३२८॥

पार्थाय प्रतिपादितं भगवता कृष्णेन गीताऽमृतं
तट्टीकां कृतवानपूर्वविशदज्ञानेन विद्याऽर्णवः ।
लोके मान्य इहाभवत् स तिलकः श्रीबालगङ्गाधरो-
राजेन्द्रं विनयावृतं सुकृतिनं प्राशंसदाशीर्गिरा । ३२९॥

*महामना: पण्डित मदनमोहनमालवीयः—*

शास्त्रीयज्ञानपुञ्जं बुधनिवहनुतो राजवन्द्यः प्रवक्ता
काश्यां तीर्थे नियोक्ता समभवदिह यो विश्वविद्यालयस्य ।
विद्याधर्मप्रचारैः प्रमहितमहिमा मालवीयो महात्मा
श्रीलं राजेन्द्रदेवं जनहितनिरतं स्वाशिषाऽवर्द्धयत् सः ॥३३०॥

*राष्ट्रपिता महात्मा गान्धी—*

यः स्वातन्त्र्यजनिप्रदो गुरुरभूत् कांग्रेससंस्थाभृतां
ज्ञानैर्यस्य गुणैश्च चारुकृतिभिः कांग्रेससंस्थोन्नतिः ।
नीत्या देशहितात्मकेन विधिना तस्यैव भीत्या तथा
देशं भारतमत्यजन् कुशलिनो वैदेशिकाः शासकाः ॥३३१॥

एवम्प्रोक्तगुणैर्युतोऽतिविदितो विश्वेषु गान्धी महान्
सत्याहिंसनरूपपुण्यनिरतो . योऽभूत्तपोमूर्त्तिमान् ।
काले सैष कलौ विना रणमहो स्वाधीनतामाप्तवान्
स्वाधीनत्वकृतेऽवतारपुरुषो नान्यो जनो यत्समः ॥३३२॥

कलौ बभूवेह यथाऽतिपूज्यो बुद्धो महात्मा करुणाऽवतारः ।
तथव गान्धी समभूदहिंसाव्रती वरिष्ठो युगपूरुषोऽसौ ॥३३३॥

श्रीमान् राष्ट्रपिता जगद्गुरुरभूत् स्वातन्त्र्यसंस्थापकः
मान्यो मोहनदास एप विदितो गान्धी महात्माऽत्र वै ।
राजेन्द्रे विनयावृते प्रियमनाः सन्तोपमेत्यानिशम्
यो देशाय पथप्रदर्शनकरो निर्मुक्तचिन्तोऽभवत् ॥३३४॥

माननीय पण्डित मोतीलाल नेहरूः—

यस्य ख्यातिः समन्ताद् विधिविशदमतेर्भारतेऽन्यत्र देश-
ऐश्वर्ये वाग्मितायामपि प्रसृतयशा उग्रतेजाः प्रतापी ।
सोऽयं दानैर्विशिष्टः प्रचुरधनयुतः ख्यातकांग्रेसकर्मा
मोतीलालोऽप्यमुष्य प्रथितधृतमतेः सुप्रशंसामतानीत् ॥३३५॥

मा० देशबन्धुचित्तरञ्जनदासः—

सम्यक् स्वातन्त्र्यहेतोर्व्यवसितधिषणः प्राग्विवाको वरिष्ठो-
लब्ध्वा वित्तं प्रपूर्णं सुविशदमतितो देशबन्धुः स दासः ।
प्रादाद् देशस्य कार्ये निजधनमतुलं राजमानस्तदानीं
सोऽपि प्रागभ्यनन्दद् विकसितयशसं श्रीलराजेन्द्रमत्र ॥३३६॥

मा० व्रजकिशोर प्रसादः—

साहाय्यं यस्य नीत्वा निखिलजननुतो गान्धिजीवो महात्मा
साफल्यं प्राप्तवाँस्तत् प्रथममधिरणं यच्च चम्पारणेऽभूत् ।
नेतॄणां यः प्रणेता प्रवर इह बुधः प्राग्विवाक-प्रधान-
मासीद् दीप्त्या प्रशस्तो व्रजप्रथमपदः श्रीकिशोरप्रसादः ॥३३७॥

प्रगाढसम्बन्धविधिं विधाय सत्त्यागशीलेन महामहिम्ना ।
राजेन्द्रदेवेन मनीषिणाऽसावानन्दमासादितवान् सुतुष्टः ॥३३८॥

*मा० मौलाना मजहरुल हकः—*

दुर्धर्षाङ्ग्लप्रशासकाद् विगतभीस्तद्दण्डने तत्पर-
स्तेजस्वी प्रतिभाविभासितवपुर्वाचा महोग्रोऽभवत् ।
कांग्रेसाय विशिष्टजीवनमहो वित्तञ्च यो दत्तवान्
मौलाना हक साहबः स मुदितो राजेन्द्रसम्पर्कतः ॥३३९॥

*मा० सर आशुतोष मुखर्जीः —*

विख्यातो वङ्गमूर्द्धेत्युपकुलसुपतिर्विश्वविद्यालयस्य
मान्यः प्रागाशुतोषः सुविततमहिमाऽसौ मुखर्जीत्युपाख्यः ।
विद्यायाः सुप्रचारादगणितजनताः शिक्षिता यो व्यतानीत्
सोऽप्यस्मिन् धीप्रगल्भे प्रमुदितमनसा श्रीप्रसादेऽन्वरज्यत् ॥३४०॥

*मा० लाला लाजपत रायः —*

लाला लाजपतः स राय इह यो नेता महान् विश्रुतः
कांग्रेसस्य सभापतिर्दृढमनाः सत्यैकनिष्ठोऽभयः ।
स्वाधीनत्वकृते रणं समतनोद्धिंसाविवर्जं पुरा
दृष्ट्वा मोदमनाः परं समभवद्राजेन्द्रकृत्यन्तदा ॥३४१॥

*मा० मौलाना शौकत अली मुहम्मद अली च—*

यः कांग्रेसकृते प्रयत्नमतुलं कुर्वन्त्समासीत्पुरा
मौलाना स हि गान्धिमार्गनिरतो धीमानली शौकतः ।
एवं देशहितोत्सुकोऽतिधिषणो मोहम्मदोऽली महान्
द्वावप्यामुदमागतौ तु नितरां श्रीदेशरत्नात्तदा ॥३४२॥

मा० सर तेजबहादुर सप्रूः —

अंग्रेजैरिह भारतीयसमरे नम्राध्वनो मोदकः
श्रेयान् यो विधिशास्त्रतत्त्वगुणभृन्नीतिज्ञवर्यस्तदा ।
सोऽयं तेजबहादुरः सुप्रतिभः सप्रूः सरोपाधिकः
श्रीराजेन्द्रप्रसादसद्गुणनिधेः कृत्याऽतुषत् सर्वदा ॥३४३॥

मा० सच्चिदानन्द सिंहः—

स्वाध्याये यः पटिष्ठो बहुनयकुशलः सद्विधिज्ञेषु मूर्द्धा
विद्वद्वर्योऽग्रगण्यो बुधजननिवहे पत्रकारेषु मुख्यः ।
आसीद् वैहारिकस्योपकुलपतिपदे विश्वविद्यालयस्य
सर्वादौ संविधाने प्रथमपदगतः सच्चिदानन्दसिंहः ॥३४४॥

स्वतन्त्रताप्ताविह भारतस्य राजेन्द्रजीवो जनतन्त्रमुख्यः ।
भविष्यतीत्थं दृढधारणाऽऽसीत् सत्सच्चिदानन्दमहोदयस्य ॥३४५॥

मा० कवीन्द्र रवीन्द्रः—

विश्वेऽस्मिन् कवितोच्चतामधिगता विद्याभिरापूरिता
ग्रन्था यस्य विनिर्गताश्च बहवो विद्वत्प्रमोदावहाः ।
लोके विश्वकवेः पदं गुरुतरं योऽधाद्रवीन्द्रो महान्
दिव्यं शान्तिनिकेतनं व्यरचयद् विद्याप्रचाराय सः ॥३४६॥

कवीन्द्रो रवीन्द्रस्तदा ठक्कुरोऽसौ
महापण्डितोऽभूत् स राजेन्द्रबाबूम् ।
जगत्यां प्रशस्तं वदान्यं वरेण्यं
सदाऽत्राभ्यनन्दत् शुभाशंसयाऽमुम् ॥३४७॥

*मा० मूलाभाई देसाईः —*

भूलाभाईसुनामाऽप्रतुलितप्रतिभो यो महाकीर्त्तिशाली
देसाई ख्यात आसीद् विमलगुणगणः संविधानज्ञमुख्यः ।
श्रीमद्राजेन्द्रजीवे धृतप्रियमनसा मानमास्थाय तुष्ट्या
सोऽपि प्राशंसदेनं नयविनयवृतं राजनीतिज्ञवर्यम् ॥३४८॥

*मा० भूतपूर्वभारतशासका अंग्रेजाः —*

अंग्रेजा भारतेशा नयविधिनिपुणाः शासका ये समासन्
तैः सार्कं सर्वदैव प्रमहितमहिमा भारतोत्थानकामः ।
व्याधत्तासौ विरोधं परमपि तु ततः सद्गुणग्राहकास्ते
तीव्राया अस्य बुद्धेर्व्यधुरिह नितरां सुप्रशंसान्तदानीम् ॥३४९॥

*मा० नेताजी सुभासचन्द्र बोसः —*

अंग्रेजैः सह भूरि युद्धमतनोत् कृत्वा नवां योजनां
सैन्यानां विपुलास्त्रशस्त्ररचितां स्वातन्त्र्यमाप्तुं द्रुतम् ।
श्रेष्ठो बुद्धिमतां विलक्षणविभो नेता प्रशस्तस्त्वहो
धन्यो बोस सुभासचन्द्र इह तं हृष्ट्याऽभ्यनन्दत् पुरा ॥३५०॥

*मा० जिन्नाः—*

अंग्रेजैः सह मित्रतामुपगतो यो बुद्धिमान् वाक्पटु—
हिंन्दू-मुस्लिमभूरिभेदकरणे दक्षोऽतितेजाः परम् ।
पाकिस्तानममुं विधाय हितकृद् -वैदेशिकानां महान्
जिन्ना विस्मितमानसः समभवद्राजेन्द्रसद्बुद्धितः ॥३५१॥

मा० सरदार वल्लभभाई पटेलः—

दुर्दान्तेन नयेन लौहपुरुषः श्रेष्ठो हि यो भारते
सूक्ष्मप्रेक्षणया च शासनविधौ दुर्लङ्घ्यतेजा व्यभात् ।
श्रीमान् बल्लभभाइनामकः इह ख्यातः पटेलो महान्
श्रीराजेन्द्रप्रसादसद्गुणगणैः प्रीतिं परां सोऽभजत् ॥३५२॥

सम्राजां शासने प्राक् प्रविततिरियती नास्य राष्ट्रस्य दृष्टा
दैवात्सा त्वेकसूत्रे सपदि च गुरुता लोकतन्त्रात्मिकाऽत्र ।
तच्छ्रेयोहेतुरेषोऽप्रमिततमयशाः स्वर्गतो गेहमन्त्री
प्रख्यातो यः पटेलो गुणगणगरिमा वल्लभो भाइ नामा ॥३५३॥

मा० मौलाना अबुलकलाम आजादः—

उर्दूविज्ञो मतिज्ञो विविधगुणविभृत् फारसीशास्त्रवेत्ता
गान्धीजीवानुयायी समभवदधिपो यो हि कांग्रेसमध्ये ।
शिक्षामन्त्रीह केन्द्रे धृतविमलयशा राष्ट्रपं प्राप्य धीरं
मौलानाऽबुल्कलामो निजकृतिमहितो मान्य आजाद नामा ॥३५४॥

मान्या सरोजिनी नायडूः—

सुभारतस्य कोकिलाऽत्र नायडूः सरोजिनी
स्वराज्यहेतवे हि या सदा रताऽतिविश्रुता ।
अभूत्तदा प्रतिष्ठिता तु राज्यपालसत्पदे
मुदाऽन्विताऽस्य राष्ट्रपस्य कर्मणा नयेन सा ॥३५५॥

*मा० पण्डित रविशङ्कर शुक्लः—*

मध्यप्रदेशगतमन्त्रिषु मुख्य आसी-
न्नीतिज्ञवर्य इह यो रविशंकराख्यः ।
शुक्लः स पण्डितवरः समतूतुषत् स्वे
राष्ट्राधिपे जनन्नुते विशदप्रभावः ॥३५६॥

*मा० डॉक्टर अनुग्रहनारायण सिंहः —*

गत्वा यदग्रे जनता समस्ता
शान्तिं समापद् विविधां स्वकीयाम् ।
महामना धन्यतमो विहारे
सोऽनुग्रहो वित्तविभागमन्त्री ॥३५७॥

बाबूरनुग्रहसुनामक एष भव्यो
नेता विहार इह लोकमतप्रतिष्ठः ।
राजेन्द्रदेवप्रियतां समवाप्य सम्यक्
ख्यातिं समाश्रयत गान्धिपथानुगत्या ॥३५८॥

*मा० चक्रवर्त्ती श्रीराजगोपालाचार्यः —*

यश्चाणक्य इवास्ति भारतहिते सद्राजनीतौ पटु-
स्त्वाचार्यः स हि राजपूर्वपदको गोपालनामा सुधीः ।
अंग्रेजीयप्रशासनान्तसुदिने सद्भारतीयां परां
सत्तां शासनहेतवे निजकरे राजेन्द्रमत्याग्रहीत् ॥३५९॥

योऽभूद् गवर्नरपदे प्रमुखो हि राज-
गोपालनामक इहांग्लप्रशासकान्ते ।
राजेन्द्रदेवसहयोगवशेन राज्यं
सञ्चाल्य भारतमिदं सुखितं व्यधत्त ॥३६०॥

मा० सर सर्वपल्लो श्रीराधाकृष्णन्—

अन्ताराष्ट्रियकीर्त्तिमेत्य लसितः योऽसौ पुराऽध्यापने
ख्यातो दार्शनिको महान् बुधनुतः शास्त्राम्बुधेः पारगः।
राधाकृष्णन विश्रुतोऽतिगरिमा सर्वादिपल्लीः सरः
श्रेष्ठे राष्ट्रपतौ सदा शुभमनाः प्रीत्या परं हृष्यति ॥३६१॥

मा० श्रीजवाहरलाल नेहरू: —

महोच्चैः सम्मानैर्महितसुमतेर्मान्यधनिनः
स मोतीलालस्य प्रियतनय एकः शशिनिभः।
महामात्यो विप्रो विलसति सुविज्ञोऽतिमहिमा
महाराजेन्द्रस्य जनगणपतेरस्य विदुषः ॥३६२॥

श्रीनेहरूरेष जवाहराख्यो नेता प्रधानं जगतीतलेऽद्य।
यो विश्वहेतोः सुखशान्तिलब्ध्यै युद्धाद् विरक्त्यै यतते च नित्यम् ॥३६३॥

एतादृशो राष्ट्रपतेर्बुधस्य राजेन्द्रदेवस्य प्रधानमन्त्री।
शान्त्याः पताकेव जगत्युदीर्णः श्रीनेहरू राजति राजनीतौ ॥३६४॥

जयी नेहरूः सर्वदेशेषु गण्यो-
महामात्य एषोऽत्र सौम्यस्वरूपः।
यथेन्द्रस्य मन्त्री गुरुर्देवलोके
तथा भारते राजते राष्ट्रपस्य ॥३६५॥

सोऽयं नीतिविदां वरोऽतिमतिमान् स्वातन्त्र्यमुद्भासयन्
पारीणः परराष्ट्रनीतिजलधेः संवित् - प्लवेनाधुना।
श्रीमद्राष्ट्रपतेरमात्यनिवहाधीशो जगद्वन्दितः
ख्यातः सौम्यवपुस्त्वहो गुणनिधिः श्रीनेहरूः शोभते ॥३६६॥

विद्युद्विद्योतमानाप्रतिममतिलसत्कीर्त्तिविद्योतिताशो-
रूसाद्यैर्देशवृन्दैरभिनवमिह यः सख्यभावं व्यनैषीत् ।
संघर्षण्यावृतांस्तान् विमुखयति ततः शान्तिमूलोपदेशैः
श्रेष्ठो राष्ट्रेशमन्त्री जगति विजयते नेहरूर्विश्ववन्द्यः ॥३६७॥

*मा० श्रीमती विजयलक्ष्मी पण्डिता—*

मोतीलालमहोदयस्य महतः कन्या वरिष्ठा श्रुता
मान्या सा विजयेति पूर्वपदका लक्ष्मीर्गुणैर्भूषिता ।
राष्ट्रेऽन्यत्र च कीर्त्तिमर्जितवती देशस्य कार्येण या
तुष्यन्तीह विराजते जनस्तुते श्रीराष्ट्रपे धार्मिके ॥३६८॥

*मा० श्रीगोविन्दवल्लभ पन्तः —*

आस्ते सन्नियमे सदा दृढमना न्यायानुवर्त्ती कृती
मन्त्री देशसुशासनाय निरतः सद्भारतस्याधुना ।
श्रीमान् पन्तमहोदयोऽत्र विदितो गोविन्दयुग्वल्लभः
प्रेयान् राष्ट्रपतेरसौ हि कुशलो राज्यस्य सञ्चालने ॥३६९॥

राष्ट्रं प्रोत्थापयितुं प्रचुरगुणो गेहमन्त्री यः ।
कौशलनम्रतोऽसौ श्रीपन्तो राजति महाप्राज्ञः ॥३७०॥

*मा० श्री जगजीवन रामः —*

ख्यातो गान्धिमतानुगोऽतिमधुरः सत्कीर्त्तिमान् धार्मिको-
रामः श्रीजगजीवनो जनहितो देशोपकृत्यै रतः ।
नाम्नोऽन्वर्थनमाश्रितः शुभमनाः स्नेहास्पदं यः सतां
श्रीमद्राष्ट्रपतेः प्रियत्वमयते मन्त्रित्वकार्ये क्षमः ॥३७१॥

अनेकधा बन्धनमाश्रितः प्राङ् नित्यं प्रियो गान्धिमहोदयस्य ।
स्वातन्त्र्यहेतोश्च कृतप्रयत्नो यो रेलवेमन्त्रिपदे विभाति ॥३७२॥

मा० श्रीमुरारजी देसाईः—

केन्द्रस्थ-वित्तीय विभागमन्त्री वक्ता नयज्ञोऽत्र मुरारजीवः ।
देसाइनामा वरकीर्त्तिधामा राष्ट्राधिपे सद्धृदयोपपन्नः ॥३७३॥

मा० श्री वो० के० कृष्णमेननः—

विश्वारक्षकराष्ट्रसंघसमितौ गत्वा तदाऽमेरिकां
पाकिस्तानकृतापवादमतुलं सत्येन संखण्डयन् ।
तर्केणाप्रतिमेण, तत्र च परामौचित्यनीतिं सदा
धत्ते भारतमित्यतिप्रथयति श्रीकृष्णयुङ् मेननः ॥३७४॥

ज्ञाता पटिष्ठः परराष्ट्रनीतेर्मन्त्री नियुक्तः प्रतिरक्षणेऽद्य ।
प्रभावितो राष्ट्रपतेः प्रतापाच्छ्रीमेननो राजति कृष्णपूर्वः ॥३७५॥

मा० श्रीगुलजारीलाल नन्दाः—

आयोजनायाश्च नियोजने यः श्रमे च मन्त्री गुलजारिलालः ।
नन्देत्युपाख्यो विततप्रभावो विभाति केन्द्रे वरशासनेऽस्य ॥३७६॥

मा० श्रीलालबहादुर शास्त्री—

उद्योगवाणिज्यविभागमन्त्री यः श्रीयुतो लालबहादुराख्यः ।
शास्त्री प्रशस्तो विदितः सुविज्ञो भातीह केन्द्रे निजदेशवृद्ध्यै ॥३७७॥

मा० सरदार श्रीस्वर्णसिंह :—

"इस्पातखानेन्धन" सद्विभागे मन्त्री पटिष्ठः सरदार एषः ।
श्रीस्वर्णसिंहोऽत्र विराजमानः स्वदेशपुष्ट्यै दृढमानसोऽस्ति ॥३७८॥

मा० श्री के० सी० रेड्डी—

आवासे जनकार्ये त्वापूर्त्तौ केन्द्रमन्त्रीं यः ।
के० सी० रेड्डीनामा ख्यातो धीमान् विभात्यत्र ॥३७६॥

मा० श्रीअजितप्रसाद जैनः—

जैनेत्युपाख्योऽजितपूर्वकोऽसौ प्रसाद आस्ते कृषिखाद्ययोर्यः ।
केन्द्रे सुमन्त्री कृषिखाद्यवृद्ध्यै रतो हि धीमान् वरभारतस्य ॥३८०॥

मा० श्री.एस० के० पाटिलः—

यातायाते तु सञ्चारे मनीषी वर्त्ततेऽधुना ।
एस० के० पाटिलो नाम्ना मन्त्री केन्द्रे प्रतिष्ठितः ॥३८१॥

मा० श्री हाफीज़मुहम्मद इब्राहिमः—

इब्राहिमो हाफिजोऽसौ मोहम्मद उदात्तधीः ।
विद्युत्-सेचनयोर्मन्त्री केन्द्रे यो भाति सत्तमः ॥३८२॥

उक्त मन्त्रिभ्यो राष्ट्रपतेस्तोषः—

स्वदेशपुष्ट्यै निरतैर्विशिष्टैः
समुत्तमै - र्मन्त्रिभिरेभिरत्र ।
विराजते राष्ट्रपतिः स्वतन्त्रे
देशे यथेन्द्रो दिवि देवसङ्घैः ॥३८३॥

अन्येषां केन्द्रमन्त्रिणामपि सुशासनयोग्यतातो राष्ट्रेशस्य प्रसन्नता—

अमुष्य सद्राष्ट्रपतेः पुरस्तात्
सन्मन्त्रिणां राजति सङ्घ एषः ।
दिल्लीस्थितो भारतशासनाय
सुशासनार्हः परमः प्रशस्तः ॥३८४॥

ये मन्त्रिणः सन्ति विराजमानाः
केन्द्रीयसंच्छासन-सिद्धि-हेतोः ।
ते सद्गुणाढ्या निजदेशसम्पत्-
समुन्नतिं वर्धयितुं यतन्ते ॥३८५॥

तत्र स्थितानां विशदप्रभाणां
पृथक्पृथक्शासन-संरतानाम् ।
विद्यावतां मन्त्रिमहोदयानां
न्यायैः स्वदेशोचितसंविधानैः ॥३८६॥

कार्यैः प्रशस्तैर्वरशासनैश्च
प्रमोदते राष्ट्रपतिः प्रतापी ।
यथा सुधर्माऽऽश्रयिणां सुराणां
शीलैः सुरेन्द्रो लभते प्रमोदम् ॥३८७॥ ( युग्मकम् )

न वच्मि विस्तारभिया हि तेषां
नामानि मन्त्रित्वपदे स्थितानाम् ।
इत्येव वक्तुं क्षमते मनो मे
तैर्मोदते राष्ट्रपतिः प्रकामम् ॥३८८॥

*मा० श्री कैलासनाथ काटजूः—*

स काटजूमहोदयः सुधीजनप्रियो महा-
नभूत्पुरा प्रशासकः स्वराष्ट्रमन्त्रणालये ।
विशिष्टराजनीतिविज्ञवर्य एष सन्मना
उपेयिवाँस्ततः परं सुरक्षणस्य मन्त्रिताम् ॥३८९॥

मध्यप्रदेशे स हि मुख्यमन्त्री कैलासनाथः श्रुतकाटजूर्यः ।
राष्ट्राधिपे तुष्यति सन्मनाः सन् विद्वान् प्रशस्तः किल संस्कृतस्य ॥३६०॥

*मा० श्री माधव श्रीहरि अणे: —*

कारागारगतं रुजा कठिनया सम्पीडितं गान्धिनं
तूर्णं मोचयितुं तदा कथितवान् वाईसरायं परम् ।
नो मुक्ते तु महात्मनि प्रियतमे स्वीयं पदं त्यक्तवान्
धीरः श्रीहरिसूनुरेप सुकृती श्रीमाधवोऽणेः श्रुतः ॥३६१॥

अस्मिन् विहारे समभूदपूर्वो-
वेदज्ञ एप प्रियराज्यपालः ।
सोऽप्यातुपद् . राष्ट्रपतेः सुमत्या
श्रीमाधवोऽणेः प्रथितप्रभावः ॥३६२॥

*मा० श्री कन्हैयालाल माणिकलाल मुन्शी:—*

ख्याता विश्वसुसंस्कृतस्य परिपद् विद्वज्जनैर्निर्मिता
तत्राध्यक्षपदं विभूपयति मे श्रीराष्ट्रपो धार्मिकः ।
श्रीमद्राष्ट्रपतेः प्रियः परिपदोऽध्यक्षोऽपरः सद्विभो-
मुंशीर्भाति स राज्यपालपदयुक् लालः कन्हैया महान् ॥३६३॥

*मा० डॉक्टर श्रो श्रीकृष्ण सिंह:—*

स्वाध्याययज्ञेपु परायणो यः
सत्येन नीत्या च सुचारुरीत्या ।
प्रशासयन् राज्यमिमं विहारं
विराजते श्रीयुतकृष्णसिंहः ॥३६४॥

सत्याग - वक्तृत्व - विशिष्टशीलै-
र्मुख्योऽत्र मन्त्री सुविहारहारः ।
श्रीमान्महाञ्छ्रीयुतकृष्णसिंहः
प्रामोदयद्राष्ट्रपतिं प्रतापी ॥३६५॥

*श्रद्धेयः सन्तः श्रीविनोबा भावेः—*

भूदानाख्यमहत्त्वपूर्णविधिना प्रख्यातिमाप्तोऽधुना
देशोत्थानपरायणोऽतिकरुणामूर्त्तिर्महात्मा प्रियः ।
भावेसंज्ञक एष यः सुधिपणो मान्यो विनोबा महान्
गान्धीजीवमतानुगेऽत्र सततं तुष्यत्यसौ राष्ट्रपे ॥३६६॥

*मा० श्रीजयप्रकाशनारायणः—*

अंग्रेजीय-प्रशासनं गुरुतरं गच्छेद् द्रुतं भारता-
दित्यर्थं यतमान एष सततं क्रान्तिं व्यतानीत् पराम् ।
तस्मात्तैश्च प्रशासकैर्विगतभीर्घोरन्तदा दण्डितो-
नेता सोऽत्र समाजवादविषये नारायणो विश्रुतः ॥३६७॥

देशस्य नेता जयपूर्वकोऽस्ति प्रकाशनारायण एष विज्ञः ।
अनारतं तुष्यति राष्ट्रपेऽस्मिन् स्वकर्मणा ख्यातिमुपाश्रयद् यः ॥३६८॥

*मा० श्रीकृपलानीः—*

आचार्यः कृपलानी विद्वान्नेता विभाति शस्तो यः ।
जनहितकर्मणि लग्नो राष्ट्रपतावत्र सुप्रीतः ॥३६९॥

*मा० श्री पट्टाभिसीतारमैया:—*

यः कांग्रेसमहासमित्यधिपतिः सद्भारतस्याभवद्
विद्वान् विश्रुतकीर्त्तिरद्भुतमतिर्वक्ता वरेण्यः पटुः ।
पट्टाभीति पदान्वितः शुचिमनाः सीतारमैयाऽभिधः
श्रीमद्राष्ट्रपतेर्गुणाननुदिनं प्राशंसदामोद्धतः ॥४००॥

*मा० श्री उच्छंगरायनवलशङ्कर ढेवर:—*

कांग्रेससंघटनमूलमहासमित्याः
श्रीढेबरोऽधिपतिरेप समुच्चचेताः ।
उच्छंगरायनवलाङ्कितढेवराख्यः
सोऽप्यत्र रज्यति विभाभृति राष्ट्रनाथे ॥४०१॥

*मा० डॉक्टर श्री विधानचन्द्र राय:—*

गान्धीजीवमहोदयस्य प्रियतां यः प्राप्य सद्भारते
श्रेष्ठो मुख्यचिकित्सकेपु विदितो धीमानसौ डॉक्टरः ।
रायोपाधियुतो विधानसहितश्चन्द्रोऽत्र राष्ट्राधिपे
प्रीत्या हृष्यति मुख्यमन्त्रिसुपदं वङ्गेपु प्राख्यापयन् ॥४०२॥

*मा० डाक्टर श्री सम्पूर्णानन्द:—*

यो ज्यौतिपे गणितवित् प्रथितः प्रशास्ता
मुख्योऽत्र मन्त्रिपु किलोत्तरसुप्रदेशे ।
ग्रन्थप्रणेतृपु समर्जितचारुकीर्त्ती—
राष्ट्राधिपे प्रियमनाः सततं विभाति ॥४०३॥

डॉक्टरोपाधिलसितः सम्पूर्णानन्दनामकः ।
विद्यारतः संस्कृतस्य संस्कृतेश्चापि पोपकः ॥४०४॥

*मा० श्रीहरेकृष्ण मेहताबः—*

योगान्धिनः प्रियगुणं समवाप्य केन्द्रे
प्राप्तसुमन्त्रिपदमल्पवयस्ककाले ।
विद्वान् सदुत्कलप्रदेश इहास्ति मुख्यो-
मन्त्री समुज्ज्वलयशा महताब एषः ।।४०५।।

हरिपूर्वककृष्णोऽसौ मेहताबो जनप्रियः ।
प्रशंसतीह राष्ट्रेशं प्रान्तोन्नतिरतः सदा ।।४०६।।

*मा० टी० प्रकाशम्—*

आन्ध्रस्योत्थानहेतोः प्रयतितसुमना मुख्यमन्त्री य आसीद्
वाग्मी नेताऽतिमान्यो नयविधिनिपुणो "टी०प्रकाशम्" समाख्यः ।
राष्ट्रेशे लोकरागान् वरविविधगुणाँस्त्यागकार्याणि चैवं
दृष्ट्वा हृष्ट्याऽतिजुष्टः समभवदथ तद्गौरवावर्जितोऽसौ ।।४०७।।

*मा० श्रीविष्णुराम मेधीः—*

यत्रास्ते जगदम्बिका भगवती गीर्वाणवन्द्या परा
'कामाख्या' स हि प्रान्त एष विदितस्त्वासामनामा शुभः ।
तस्मिन् मन्त्रिषु मुख्यसत्पदगतो मेधीः सुधी राष्ट्रपे
प्रीत्या मोदमुपागमज्जनहितः श्रीविष्णुरामो महान् ।।४०८।।

*कश्मीरे सदरे-रियासतो युवराजः श्री कर्ण सिंहः —*

सदरे - रियासतोऽसौ युवराजः कर्ण सिंहो यः ।
राष्ट्रपतावनुरज्यति प्रतिनिधिरेतस्य कश्मीरे ।।४०९।।

शेखोऽब्दुल्लाः कुटिल-नयतो यर्हि कश्मीर राज्ये
केन्द्र-द्रोहे कृत-मतिरभूत्तर्ह्यमुं यो न्यगृह्णात् ।
तद्-दुर्नीतिं कुशलविधिनाऽह्नाय भित्त्वाऽभयार्थं
प्रत्युत्पन्न-प्रतिभ इह सोऽद्य स्तुतः कर्ण सिंहः ॥४१०॥

*कश्मीरे मुख्यमन्त्री बक्शीः श्री गुलाम मुहम्मदः—*

बक्शी मुहम्मद-समाख्यक मुख्यमन्त्री
कश्मीर राज्य इह कीर्त्ति-वृतोऽधुना यः ।
राष्ट्राधिपे तदुचितेन नयेन नम्रो—
ऽनुप्राणितो भवति राज्य-सुरक्षणाय ॥४११॥

विध्वसंकार्यरचकैरपि पाक-चारै-
र्न त्रासिता चलति यज्जनता-प्रतीतिः ।
बक्शी-नयश्च दृढताऽपिच भारतीया
तन्मूलमुल्लसति भाति ततोऽत्र शान्तिः ॥४१२॥

लोकप्रिया धीधनराजिता ये
नराग्रगण्या भुवि भारतीयाः ।
श्रीदेशरत्नेन सखित्वमेत्य
ते प्रातुषन् सद्व्यवहारतोऽस्य ॥४१३॥

*अन्येषां देशनेतॄणां चर्चाऽकरणे कारणम्—*

देशेऽस्मिन् गुणिनो हि सन्ति बहवः स्वार्थं विहायानिशं
ये स्वातन्त्र्यरता जनाः सहृदयाः प्रीत्याऽन्विता राष्ट्रपे ।
नेतारो विविधा विभान्ति सुधियः श्लाघ्यास्तथा मानिन-
स्तेषां ग्रन्थसुविस्तृतेरिह भिया चर्चा कृता नो मया ॥४१४॥

*कांग्रेसेतरसंस्थास्थितानामप्यस्मिन् विश्वासः—*

ये कांग्रेसबहिर्मुखा जनगणा अन्यान्यसंस्थास्थिता-
स्ते सर्वेऽपि समत्र सन्ति सततं संश्रद्दधाना मुदा ।
राष्ट्रेशे गणनायके सममतौ देशाय सच्चिन्तके
प्रीत्या प्रत्ययमर्पयन्ति परितः प्रत्युद्गताः प्राग्गताः ॥४१५॥

*अन्यैरसाधितकार्यस्य साधनम्—*

क्लिष्टे कर्मणि योगदानभयतो यस्मिन्निवृत्ता जना-
स्तत्कार्यं विधिवत्तदेह ससुखं सम्पादयन्धीधनः ।
कांग्रेसस्य महत्त्वपूर्णमखिलं कृत्यञ्च कुर्वन्नसौ
श्रीमद्गान्धिमहोदयस्य हृदये सन्तोषमास्थापयत् ॥४१६॥

*अस्य शासने सबलनिर्बलयोः समानत्वम्—*

सोऽयं राजेन्द्रबाबूः सकलगुणगणो नेतृसंघे वरिष्ठः
स्वातन्त्र्यस्याप्तिहेतोरतिशयमनिशं संव्यधात्संविधानम् ।
लोकः स्वस्वाधिकारं कलयति हि यतः प्राप्तनीतिप्रकर्षो-
न्यूनः कश्चिन्न बाध्यो भवति बलवताऽदो युगं वर्त्ततेऽद्य ॥४१७॥

*राजशक्तावलिप्तता—*

भासि क्षान्तमनाः स्मितश्च परितः सैन्यैः समासेवित-
फुल्लं पुष्पमिवात्र कण्टकभरैरावेष्टितं पाटलम् ।
शक्तिस्ते तृणताडनं न सहते व्यालीव दर्पोत्फणा
त्वं तन्मूर्धनि राजसे मणिरिवालिप्तोऽमृतालेपनः ॥४१८॥

*अस्य विशिष्टगुणवर्णनम्—*

धर्मध्वंसमतापवादकविधिं सन्तन्वतः सर्वदा
विद्याधर्मविवेकशीलसुपमां संविभ्रतो दीव्यतः ।
लोकाचारप्रचारचारुसुमतेः श्रीदेशरत्नस्य ते
प्रख्यातैः कमनीयकीर्त्तिनिचयैः सद्भारतं भ्राजते ॥४१९॥

श्रीमद्गान्धिमहोदयेन सह यो हिंसानिवृत्तोऽभवत्
स्वाधीनत्वकृते स्वदेश इह यः प्रारम्भभित्तिं व्यधात् ।
अद्यत्वे सततं स्वदेशममलं सच्छान्तिसौख्यान्वितं
कर्त्तुं संयतते व्रती परमसौ श्रीदेशरत्नं मुदा ॥४२०॥

नक्षत्रेषु यथा शशी सुमहता धाम्ना च विद्योतते
नेतॄणामयमुच्चगौरवजुषां श्रेष्ठो गरिष्ठस्तथा ।
श्रेयः संवितरद् गुणाननुदिशल्लोकान् सुखैं रञ्जयद्
दुर्नीतिञ्च निवारयद् विजयते श्रीदेशरत्नं क्षितौ ॥४२१॥

वल्लभभाइ-जवाहरौ विजयिनौ राजेन्द्रबाबूस्तथा
प्रासन् राष्ट्रपितुः परं प्रियतमा नेतार एते त्रयः ।
स्वातन्त्र्याप्तिदिने ततो हि सुखदां सत्तां समश्नन् परां
देशस्यास्य समृद्धयेऽतिनिपुणाः शास्तार एवन्त्विह ॥४२२॥

मधुरगुणगणानामाकरः शीलसम्पद्
विविधविधिसमृद्ध्या बोधमाभासयन् यः ।
जनगणहितहेतोरुद्यतः सन्ततं स्वां
विशदयति वरेण्यां सत्प्रतिष्ठां जगत्याम् ॥४२३॥

*भारते प्रथमनागरिकत्वम्—*

प्रथमनागरिकोऽसि मतः स्वकं
भजति शासनमुन्नतभारते ।
नहि विधानदशैव समुज्ज्वलन्-
निजप्रसूत्वरकीर्त्तिदशाऽपि च ॥४२४॥

*अजातशत्रुत्वम्—*

देशक्लेशविनाशलग्नहृदयः सत्संस्कृतेः पालकः
नानिष्टं कृतवान् कदाऽपि सदयो ज्ञानेन कस्यापि यः ।
एवं सोऽयमजातशत्रुरिह से राजेन्द्रजीवः श्रुतः
कीर्त्याऽस्मिञ्जगतीतले समभवत् ख्यातोऽमरो राष्ट्रपः ॥४२५॥

*क्षमागाम्भीर्य्यादिगुणाः—*

क्षमायां भूतुल्यो जलधिरसि गाम्भीर्यवरणे
हिमाद्रिः संस्थैर्ये हिमकर इवाह्लादनविधौ ।
प्रतापे भास्वान् यो विशदधिषणायां गुरुरिव
स दीनानां भर्त्ता जयति करुणामूर्त्तिरुदितः ॥४२६॥

*सर्वोच्चशासकत्वेऽपि स्वस्यार्थे निःस्वता—*

शिवो निःस्वः स्वेऽर्थे सकलजगतीं रक्षति यथा
सुरेभ्योऽर्थं प्रेम्णा वरममरताया वितरति ।
तथाऽयं राष्ट्रेशो भरतभुवि शस्ताऽपि सुमहान्
स्वकार्यार्थे रिक्तो नरपतिरिहास्तेऽगतिरिव ॥४२७॥

*भगवतश्चित्रगुप्तस्य कुलेऽस्माद्विकासः—*

स चित्रगुप्त आदिपूरुषः स्वकेऽन्वये ध्रुवम् ।
विकाससीम्न्यदः पदं प्रमंस्यते त्वयाऽर्जितम् ॥४२८॥

*राष्ट्रपतेः स्तुत्यचरित्रचर्चा—*

स्वीयस्फीतमतेन दर्शितनयो संवर्द्धयन् योजनाः
सर्वाङ्गीणविकासभासकरणे. देशस्य लग्नान्तरः ।
सर्वान्. बोधयति प्रबोधनगिरा निर्दोपमात्मोन्नतौ
सोऽयं विश्वजनीननीतिनिपुणो विश्वस्य गोप्ता प्रभुः ॥४२९॥

सायं प्रातरुपोढरागमनसा गाथां शृणोत्यादरा-
द्भूम्यां वेदपुराणवर्णितचरां संस्कारशुद्धिप्रधीः ।
शङ्काग्रन्थिमुदस्य मर्मणि मनः संवेश्य शास्त्रस्थितेः
प्रोद्बुद्धप्रतिभाविभासितमनाः सोऽयं मनस्वी यमी ॥४३०॥

दिगन्तसञ्चारसमञ्चितश्री-
र्निश्शेषतीर्थस्थलपुण्ययात्रा ।
उद्बोधयत्युद्भटमार्यधर्मे
सनातने प्रीतिममुष्य सद्यः ॥४३१॥

*संस्थोद्घाटनं भाषणञ्च—*

उद्घाटयन्नैकविधाः सुरम्याः
संस्थाः सदा तासु च भाषमाणः ।
ज्ञानं निगूढं प्रविकास्य सम्यग्-
जनात्मनां बोधविवृद्धिकृद् यः ॥४३२॥

*अस्य राष्ट्रपत्वे भारतस्य धन्यत्वम्—*

उच्छ्रायच्छविमाधुरी गुरुगुणा गीर्वाणवाणी मुदा
वीतग्लानिरुपागतात्मपदवी चार्यैः श्रिता संस्कृतिः ।
किञ्चाक्रोधविनम्रतासदयतादाक्षिण्यमूर्त्ते ! प्रभो !
धन्यं भारतवर्षमद्य तदहो ! त्वद् राष्ट्रपत्ये स्थितम् ॥४३३॥

*सरसभाषणादिना प्रजारञ्जनत्वम्—*

अशेषनृपशक्तिभिर्गुरुगभीरमर्यादया
ज्वलन्निव महौजसाऽनल इवासि दुर्लङ्घनः ।
परं सरसभाषितैः स्मितमुखेन चार्द्रेक्षणैः
सुशीतलकलां सदा कलयसे प्रजारञ्जनः ॥४३४॥

*गान्धिनाऽस्याशंसनम्—*

कपटनयवितृष्णः क्षान्तिशान्तिप्रियस्त्वं
कृतिवचनमनोभिः संयमं संबिभर्षि ।
अत इह हि समग्रेष्वेव नेतृष्वपूर्वः
प्रथमपदमुपेतो गान्धिना शंसितोऽसि ॥४३५॥

*अस्य भाषणेऽक्षयप्रभावोत्पादकता—*

वदन्ति बहवोऽमितं जनसभासु मेघस्वनैः
क्षणस्थितिकरान् हि तेऽत्र दधते प्रभावाँल्लघून् ।
समल्पस्वभाषणैः प्रचुरसारगर्भैरसौ
समर्पयति यान् रसान् जनमनस्सु ते ह्यक्षयाः ॥४३६॥

*मार्दवादि गुणपरिकीर्त्तनम्—*

केते येऽस्य हि मार्दवेन मधुना सम्मोहनं नाश्रिताः
कर्त्तव्यं प्रति निष्ठुरा च दृढता केषां स्मयायास्य नो।
शुद्धं सात्त्विकमस्य जीवनमथैकच्छत्रराज्यं पदम्
पश्यन्तः परिकल्पयन्ति सुबुधा ब्रह्मस्थमायास्थितिम् ॥४३७॥

*ऐश्वर्य्ये सत्यपि निर्लिप्तता. मदाभावश्च—*

भोग्ये वस्तुनि रज्यति क्वचिदपि प्राप्यापि नैतत्पदं
शक्रस्पर्द्धिसमृद्धिसम्भृतमहो निर्लिप्तताऽऽश्चर्यकृत् ।
स्थित्वा यो मदधाम्नि काममपि नो धत्तेऽणुमात्रं मदं
तत्सत्यं यदिहाहिसंगतिभृतां नो चन्दनानां विषम् ॥४३८॥

*लोकोत्तरचरितत्वम्*

शौर्यं दुष्ट-नियन्त्रणे शुचिरुचि स्थैर्यं सतां रक्षणे
चातुर्यं शुभकार्यसर्ज्जनविधौ माधुर्यमार्त्तेषु सत् ।
औदार्यं सुजनेषु सत्पथपरित्यागेऽथ कादर्यकं
चैतस्मिँश्चरितन्तदेतदखिलं लोकोत्तरं जृम्भते ॥४३९॥

*राष्ट्रपतिभवनं, मुगलोद्यानञ्च—*

यस्याकारविशालताऽतिसुषमा नानाकलानिर्मिता
द्वाराण्युच्चतमानि पुष्टलसिताः स्तम्भा गवाक्षादयः ।
रम्यैश्चित्रविचित्रितैः सुविशदैः कोष्ठप्रकोष्ठैस्तथा
प्रासादैर्विविधैर्विराजितमहो राष्ट्रेशसद्म प्रियम् ॥४४०॥

यद्गेहस्य समं न चास्ति भुवने गेहं श्रिया द्योतितं
यत्रास्ते कुसुमप्रतानललिता प्रोद्यानशोभा परा ।
यस्मिन् वारिकणाः समूर्ध्वमुखगा निर्यान्त्यनेकस्थले
वल्ल्याह्लादनमालवालरचनं यत्रास्ति दृश्यं महत् ॥४४१॥

मुग़ल - गार्डन नामकमेव तत्
सुविततं भुवि मञ्जुलमद्भुतम् ।
यदवलोक्य जनाः प्रमुदान्विता
इह भवन्ति न दृश्यमतः परम् ॥४४२॥

*राष्ट्रपतिना तद्भवनस्य दीप्तिः*

दीव्यद्देवपुरे यथा स्वभवने देवेन्द्र आभासते
तद्वत्सद्भवने तु राष्ट्रसुपते राष्ट्रेश आभाति मे ।
देवेन्द्रेण यथा विकासमयते देवालयो नित्यशो-
राष्ट्रेशेन च राष्ट्रपस्य भवनं देदीप्यमानन्तथा ॥४४३॥

*राष्ट्रपतेः पताका—*

मान्या राष्ट्रगुरुत्वसूचनपरा सौम्या पताका वरा
लोके मानविवर्द्धिनी शुभकरी सर्वप्रभुत्वावृता ।
श्रेष्ठा राष्ट्रपतेरमुष्य विदिता नानाकला निर्मिता
राष्ट्रेशत्वविकासिनी विजयते सर्वप्रशान्तिप्रदा ॥४४४॥

यस्यान्तु सिंहगजपद्मतुलात्मकानि
चिह्नानि राष्ट्रपगुणार्थकसूचकानि ।
नीलारुणाङ्कनमयी सुषमा चतुर्धा
विश्वप्रिया जयति राष्ट्रपतेः पताका ॥४४५॥

*राष्ट्रपति-भवनस्यारक्षिणः—*

राष्ट्रेशसद्म-प्रतिरक्षणार्थमारक्षिणः शस्त्रभृतः समत्र ।
नियोजितास्ते हि भवन्ति नित्यं प्रभावि दृश्यन्तदतीव शश्वत् ॥४४६॥

*प्रात्यहिकं सैनिकैरभिवन्दनम्—*

नृपतिसेवनसंरतसैनिका
इह हि शस्त्रधराः क्रमसंस्थिताः ।
प्रतिदिनं शुभराष्ट्रपतिं मुदा
सविनयं प्रणमन्ति सुरीतितः ॥४४७॥

*राष्ट्रपतेरुदयगिरिगजः—*

ऐरावतः सुरपुरे बहुमङ्गलाय
शक्रप्रियोऽतिप्रथितो द्युतिसंवृतश्च ।
ख्यातस्तथोदयगिरिर्वरराष्ट्रपस्य
राष्ट्रोत्सवे श्रियमिहातनुते शुभञ्च ॥४४८॥

*अस्य वायुयानम्, मृत्तरयानञ्च—*

आकाश-मार्गे द्रुतगामि वर्यं सद्राज्यचिह्नाङ्कितमत्र दिव्यम् ।
इदं डकोटाभिधवायुयानं विभ्राजते राष्ट्रपते र्वरस्य ॥४४९॥

विलक्षणं सूच्छ्रितसत्पताकं सुखोपवेश्यन्त्वरितप्रयाणम् ।
तन्मृत्तरं यानमिहातिरम्यं विभाति राष्ट्रेश-निषेवणाय ॥४५०॥

*राष्ट्रपतेर्मुद्रा—*

सम्राडशोकस्य सुराज्यचिह्नं त्रिसिंहरूपात्मकमेतदासीत् ।
तेनैव रूपेण विराजमाना मुद्रा चलत्यस्य तु राष्ट्रमध्ये ॥४५१॥

राष्ट्रपतेः परिचरा 'ए० डी० सी०' गणाः—

श्रीमद्राष्ट्रपतेः सुरक्षणकृते सिद्ध्यै च तत्कर्मणाम्
योग्यास्ते नियमानुपालनपराः सत्कान्तिलक्ष्माद्वृताः ।
ए०डी०सी०ति . समाख्यकाः परिचरा विश्वासभाजः सदा
सेवन्ते बहुमानतो गुणनिधिं राष्ट्राधिपं सर्वतः ॥४५२ ॥

गणतन्त्रदिवसोत्सवः—

पङ्क्त्याबद्धसुसज्जिताश्वनिचये प्राक् संस्थिताः सैनिकाः
पश्चात् षड्भिरिहाश्वकैर्विलसितो मुख्यो रथो भासते ।
रत्नाद्योतितहेमनिर्मितमहच्छत्रन्तथा चामरे
यस्मिन् भान्ति रथे च सैन्यसचिवः पृष्ठाग्रगाः पार्षदाः ॥४५३॥

तस्मिन् रथे महविधौ वरराष्ट्रपोऽसौ
स्थित्वा सुखं स्वभवनात् सह सैनिकैस्तैः ।
संवन्द्यमान इह याति मुदा प्रपश्यन्
नानाविधान् नृपपथस्थितदर्शकाँस्तान् ॥४५४॥

तमिण्डियागेटमुपेत्य तत्र प्रधानमन्त्र्यादिभिरुच्चलोकैः ।
श्रीमानसौ तैर्वरराजदूतैरन्यैस्तदाऽऽप्नोति च वन्दनान्ताम् ॥४५५॥

प्रत्यब्दं गणतन्त्रघोषणदिने यत्रोत्सवो जायते
षड्विंशन्मितसत्तिथिर्जनवरीमासस्य साऽऽस्ते स्तुता ।
शस्त्रास्त्रैः परिभूषिता ज्वलनभःक्षोणीचराः सैनिकाः
पुण्याहेऽत्र नमन्ति राष्ट्रपममुं मोदोन्मदः स क्षणः ॥४५६॥

*अस्य विशिष्टोत्सवे राजप्रतिनिधीनां परेषाञ्च परिचयविधिः—*

राष्ट्रेशस्य महोत्सवे सुविशदे राज्य-प्रभोद्भासिते
देशेभ्यः क्षितिमण्डलस्य नृपतीनां प्रातिनिध्ये स्थिताः ।
अन्ये चापि विशिष्टगौरवभृतः सम्मानिताः सज्जनाः
एकत्रात्र मिलन्ति यत् परिचयै राष्ट्रेशतस्तद् मुदे ॥४५७॥

*तत्र देशीय युवराजानां मान्यः सहयोगः—*

राजानो युवराजसत्पदजुपस्तेऽनेकराज्यागताः
सौन्दर्येण विभासिता बहुविधैर्वेषैश्च भूपादिभिः ।
तस्मिँश्चारुमहोत्सवे गुरुतरां शोभां श्रयन्तः पराम्
ए० डी० सी० ति पदं नयन्ति कुशलाः श्रीराष्ट्रपस्याग्रतः ॥४५८॥

*स्वातन्त्र्यदिवससमारोहः—*

शस्ते पञ्चदशाङ्किते तिथिवरेऽगस्तस्य मासे तदा
स्वातन्त्र्यञ्चिरवाञ्छितं समगमद् गौराङ्गसङ्घर्षतः ।
राष्ट्रेशस्य गृहे च राजभवने वोभूयते हर्षदो-
"झण्डोत्तोलनसद्विधिः" सपदि तद् राष्ट्रोत्सवे श्रीमति ॥४५९॥

*लोकराज्यसभयोरुद्घाटनाय शोभायात्रया राष्ट्रपतेस्तत्र शुभागमः—*

आरम्भे लोक-राज्योभयशुभसभयोः सत्रकाले तदानीम्
गच्छत्-सद्घोटकस्थैश्छवि-भर-कलितैः सैनिकैः सत्पताकैः ।
श्रेष्ठैस्तैः सद्भिरुच्चं वररथसुखदं स्वासनं सन्दधानः
शोभा-यात्राक्रमेणाप्रतुलितमहिमा राष्ट्रनाथः प्रयाति ॥४६०॥

*तत्र सत्रारम्भेऽस्य प्रथममभिभाषणम्—*

यो लोकराज्यसभयोर्मिलिते सुसत्रे
सर्वाग्रमेत्य रुचिरं परिभाषमाणः ।
कर्त्तव्यसद्विधि-विनिर्मितिमत्र युक्तां
सम्यङ् निदर्शयति राष्ट्रपतिर्विधिज्ञः ॥४६१॥

तद् भाषणं राष्ट्र-समृद्धिहेतोर्जायते सर्वसुखं हि तत्र ।
सभ्यास्तदा तत्सभयोर्विधेये कृत्ये निजे लग्नहृदो भवन्ति ॥४६२॥

*राजदूतपरिचयप्रक्रिया—*

विभिन्नदेशेभ्य इहागता ये सद्राजदूताः परिचायकं स्वम् ।
पत्रं पुरस्ताद् वरराष्ट्रपस्य समर्पयन्तो मुदमावहन्ति ॥४६३॥

देशेभ्योऽत्र समागता नयविदो ये राजदूता वरा
राष्ट्रेशस्य सुखास्पदं महविधौ सम्प्राप्य तद्दर्शनम् ।
आनन्दं परमं श्रयन्ति विशदान्तां सभ्यतां भारते
दृष्ट्वा शासनपद्धतिश्च प्रवरान्ते विस्मयं यान्त्यलम् ॥४६४॥

तदर्थमेवात्र समुत्सवो यः सन्दर्शनीयो भवति प्रकृष्टः ।
तदीयचित्रं सततं समत्र पत्रेषु प्राकाश्यमुपैति रम्यम् ॥४६५॥

*एकेन अनेनैव भारतगुरुत्वपरिचयः—*

नानादेशागता ये भ्रमणगतजना भारतं द्रष्टुकामा
यात्रायास्तत्र वीक्षाविषयसरणिषु त्वामवश्यं नयन्ति ।
उच्चत्वेनार्जवेनापि च तव विनताः प्राप्नुवन्ति प्रभाव-
मेकेनैव त्वयाऽदो भवति परिचितं भारतीयं गुरुत्वम् ॥४६६॥

*प्रत्यब्दं राष्ट्रपतिकृतं पुरस्कारोपाधिप्रदानम्—*

विमुञ्चन्त्यसून् राष्ट्र-रक्षा-विधौ ये
सृजन्त्युद्भटां कीर्तिमेवं कलाभिः।
भटाँस्तान् कलाढ्यानथो राष्ट्रपोऽसौ
पुरस्कृत्युपाधि - प्रदानैर्युनक्ति ॥४६७॥

पद्म-विभूषण—पद्म-श्री प्रभृतिः सदुपाधिः कलया।
परम-वीरचक्रादि च पदकं शूरतया श्रित-बलया ॥४६८॥

*अस्य काले राज्यपरिषद्-विधानपरिषदोःकलाविदां सदस्यत्वाय मनोनयनम्—*

राज्ये विधान-परिषद् केन्द्रे या राज्य-परिषद् वा।
तत्र मनोनीतास्ते कलाविदो यान्ति कालेऽस्य ॥४६९॥

निर्वाचन-युद्धे ये शान्तहृदो नो रुचिन्दधते।
इत्थन्तेषाम्बोधा जन-सुलभा अद्य जायन्ते ॥४७०॥

*अस्य राष्ट्रयात्राक्षणे लोकाकर्षणम्—*

यत्र त्वं भ्रमितुं प्रयासि नगरे राष्ट्रस्य यात्राक्रमे
दृष्ट्वा राजपथे सुखानि दधते त्वां पङ्क्तिबद्धा जनाः।
सौजन्यम्रदिमा मनोमधुरिमा स्मेराननस्फीतिमा
त्वय्यावेश्य यतः स्थिरा असि ततस्त्वं दर्शनीयो महान् ॥४७१॥

*अस्य दर्शन-वचःश्रवणयोः प्राशस्त्यम्—*

सोऽयं नेत्रमहोत्सवः क्षण इह त्वं यत्र सन्दृश्यसे
त्वद्वाचामभिधारणं यदमृताधानं हि तत् कर्णयोः।
दृष्टे नीलवलाहके मृदुहृदां रोमोद्गमः, का कथा
मन्द्रध्वानवितीर्णहर्षणकणे तस्मिन् पुनर्वर्षति ॥४७२॥

बहिः समागतस्यास्य राजधानीप्रवेशविधिः—

सुरेश्वरश्रीः पुरमुत्पताकं दिल्लीतिसंज्ञं प्रमुदा प्रविश्य ।
सैन्यैर्वरैर्द्रागभिवन्द्यमानो राष्ट्रस्य भारं भुजयोः स धत्ते ॥४७३॥

अस्य शासने नवाभ्युदयकार्याणि—

राजस्वं राज-कोषे जन-हित-कृतये स्थापितञ्जायतेऽद्य—
प्रोत्थानेऽनेकरूपे भवति सुकरता यद्व्ययेनात्र देशे ।
शास्ता चैवं प्रजाः स्वेऽध्वनि विधि-विहिते सौम्यसम्बन्धभाजः
सज्जीभूताः प्रगत्यै तदिदमुपचितं राष्ट्रमुत्कर्षमेति ॥४७४॥

अत्यन्तं स्टील-लौहान् प्रजनयितुमहो यन्त्रनिर्माणसंस्था
स्थाने राऊरकेलाऽभिध इह घटिताऽन्या च दुर्गापुरेऽपि ।
भीलाईसंज्ञके च प्रथितसुरुचिरो लौहनिर्माण-यन्त्रा—
गारः सन्निर्मितोऽद्य प्रभवति वसुनो वृद्धये देशपुष्ट्यै ॥४७५॥

भूमिर्नोर्वरतां प्रयाति यदिहेत्यालोच्य दुःखास्पदे—
राजस्थान प्रदेश एष प्रपथोऽपां रच्यते साम्प्रतम् ।
तस्माद् वृष्टिमृतेऽपि पुष्कलजलं भूमिं समासेचितुं
सम्भावि, प्रचुरं भविष्यति यतः शस्यान्वितं तत्स्थलम् ॥४७६॥

राष्ट्रपतेः सकलधर्मरक्षणनीतिः

मन्दिर-मस्जिद-चर्च-गृहाणां तदनुगतानां नैकमतानाम् ।
अविशेषा संरक्षणरीती राष्ट्रपतौ त्वयि राजति नीतिः ॥४७७॥

*अस्मिन् पञ्चपाण्डवत्वम्—*

सत्ये सैप युधिष्ठिरो बलनिधिर्भीमो रिपूणां भये
श्रीमानर्जुन एप उज्ज्वलयशःकान्त्या च चन्द्रश्रिया।
उद्बुद्धो नकुलः कुकृत्यभुजगध्वंसने दैववित्
सोऽयं श्रीसहदेव एकतनुमान् पञ्चात्मकः पाण्डवः ॥४७८॥

*अस्य स्वार्थत्यागः—*

धर्त्ता धीरं धरित्रीं निजशिरसि तथा वासुकिस्त्यक्तदंशः
सम्राट् शक्तीरुपेत्यापि न किमपि सृजत्युत्कटं वृत्तमेपः।
वाञ्छाप्रोच्छालनाय व्यवहरति न यथा योगिराट् स्वाष्टसिद्धीः
शीर्पण्यः शासकोऽयं कलयति न बलं स्वार्थसन्तर्पणाय ॥४७९॥

*देशरत्नस्य राष्ट्रपत्वे प्रजातन्त्रवादादिगुणाः—*

साम्राज्यं भारतीयं भुवि विदितमहो सार्वभौमं स्वतन्त्रम्
सन्दीप्तं लोकमान्यं बहुविधविभवं सत्प्रजातन्त्रवादम्।
आस्ते धीधर्मयुक्तं जगति च सकले शान्तिदूतन्दृढं यत्
जातन्तद्राष्ट्रमेवं निखिलगुणगणे राष्ट्रपे देशरत्ने ॥४८०॥

*राष्ट्रेश-कृता 'अटो वैग्राफी' ग्रन्थ-रचना—*

अटोवैग्राफीयं विरचनमिता राष्ट्रपतिना
सुरम्या बोधार्थं सकलविपयाणां चितितले।
यतो भापामांग्लीं विरचनविधौ पुस्तककृते
समासादत् सोऽयं प्रसरति ततः पुस्तकमिदम् ॥४८१॥

त्रिंशे दिनेऽक्तूबरमासि सप्तशराङ्कचन्द्रैः प्रमिते गताब्दे ।
आङ्ग्ल्या गिरा सा रचिता स्वकीया कथाऽतिरम्या वरराष्ट्रपेण ॥४८२॥

"ऐट् दी फीट ऑफ महात्मा गान्धी" नामक पुस्तक-रचना—

ऐट् दी फीट् पदान्वितौफ सहितश्चाग्रे महात्माऽन्वितो-
गान्धीत्येष हि नामतः श्रुत इहामोदावहः सर्वदा ।
ग्रन्थः संरचितः स राष्ट्रपतिना यो लोकशिक्षाप्रदः
शीघ्रं यास्यति सत् प्रकाशमधुनाऽऽङ्गल्या भाषयाऽसौ मुदे ॥४८३॥

*अथ राष्ट्रपतेः सन्तत्यादिचर्चा*
*तत्र ज्येष्ठात्मजः श्री मृत्युञ्जय प्रसादः—*

राजेन्द्रो राजवंश्यां परिणतसुकृतः पुण्यपूतप्रभायां
दिष्टोद्रेकादविन्दत् प्रथमसुतवरं सैष मृत्युञ्जयोऽस्ति ।
माधुर्यं गाढमनः प्रियनतवचसा चारुकृत्या प्रकृत्या
साधुत्वाद्यैः स्वभावैः कुलगुणमयतेऽसौ पितुश्चानुकुर्वन् ॥४८४॥

सोऽयं पूज्यपितामहस्य महतः संस्कारतः सन्मना
एवं राष्ट्रपतेर्महामतिमतः पुण्यात्मनः सत्पितुः ।
पत्रादिव्यवहारमारचयितुं शक्नोति यः संस्कृते
श्रीमृत्युञ्जय एष भाति रुचिरो राजेन्द्रदेवात्मजः ॥४८५॥

विनयेन नयेन मेधया जनकस्यानुकरोति योऽनिशम् ।
वसुनोऽर्ज्जनकृत् सुकर्मणा ह्यसु-बीमा-निगमाधिकारभृद् ॥४८६॥

गुणाकरः संस्कृतवाङ्मये यस्तर्के समुत्थापयितुं समर्थः ।
स्फीताङ्गलभाषां च विशुद्धहिन्दीं संवेत्ति साहित्यमपीह तेषाम् ॥४८७॥

सनातनं धर्ममनुव्रजन् योऽनुकर्त्तुमीष्टे स्वपितुर्वरस्य ।
कुलप्रशस्तेर्जनकस्य कीर्त्तेः प्रसारणे चापि विवृद्धचेताः ॥४८८॥

न केवलं पितृगुणो महीयान् विख्यातनामा श्वशुरोऽप्यमुष्य ।
वैशिष्ट्यमित्थं किल विद्यतेऽत्र स्वकैर्गुणैश्च प्रभया गुरूणाम् ॥४८६॥

*कनिष्ठात्मजः श्रीधनञ्जयप्रसादः—*

अन्यश्चापि धनञ्जयाभिधमसौ कालात् परस्मात्ततः
सूनुं लौकिकरीतिनीतिनिरतं लब्ध्वा भृशं हर्षितः ।
एवं सोऽत्र सुतद्वयाहितसुखः पत्न्या सह स्ताच्चिरं
राजेन्द्रो यशसा श्रिया विलसितो दीर्घायुषा पोषितः ॥४६०॥

आकारेण पितुः समो विनययुग्गम्भीरतामास्थितः
श्रीमद्राष्ट्रपतेः पितुः प्रियतया स्नेहेन मातुश्च यः ।
वंशानुक्रमसम्पदाऽऽवृत इहास्ते तत्प्रबन्धे रतः
सोऽयं भाति धनञ्जयो गुणगणैः सल्लौकिकत्वे पटुः ॥४६१॥

पित्रोः प्रियो योऽतितरां सुभक्तिर्देव्याञ्च यस्यास्ति प्रपन्नरूपा ।
भक्त्याः समुद्रेकशुभक्षणे यो धनञ्जयः शक्तिमुपैति दिव्याम् ॥४६२॥

*देशरत्नस्य द्वितीया पुत्र-वधूः—*

शोभते पति-पुत्राभ्यां कन्याभिश्च सुलक्षणा ।
धनञ्जय प्रसादस्य पत्नी शीलगुणान्विता ॥४६३॥

*सुताभ्यामस्य सुखित्वम्—*

उमाशिवौ मोदमितौ यथा तौ श्रीकार्त्तिकेयेण गजाननेन ।
तथा सुताभ्यामिह राष्ट्रपोऽसौ पत्न्या सहानन्दमुपैति पूर्णम् ॥४६४॥

*भ्रातुरात्मजः श्रीजनार्दनप्रसादः—*

सहोदरस्यास्य महेन्द्रनाम्नो जनार्दनाख्यः शुभसूनुरास्ते ।
पुत्रः सुधीस्तस्य सुताश्च तिस्रः पित्रात्मनो रूपभृतो विभान्ति ॥४६५॥

सद्योग्यः सोऽभियन्ता विलसति नितरां राज्यरक्षाविभागे
स्वीयोत्कृष्टप्रतापाहितगुरुगरिमा भास्वरश्चिद्विशेषात् ।
वंशख्यातप्रभावावनविधिकुशलः शीलसम्पत्तिपात्रम्
मित्रं सद्भावभाजां भजति गुणगणैः पितृवैशिष्ट्यमेषः ॥४६६॥

पितृव्यं प्रियमानसं गुणगुरुं धर्मैकनिष्ठं परं
श्रेष्ठाचारविचारचारुकृतिभिः सन्तोषयन् राष्ट्रपम् ।
पितृव्यस्य पितुश्च कीर्त्तिलतिकां विस्तारयन् योऽनिशं
सोऽयं भाति जनार्दनः शुभमनाः धीरः प्रसादाभिधः ॥४६७॥

*देशरत्नस्य भ्रातुष्पुत्रस्य बधूः—*

श्रीसौभाग्यगुणोपेता सुताभिः सुविराजिता ।
जनार्दन प्रसादस्य पत्नी कुलयशस्करी ॥४६८॥

*देशरत्नज्येष्ठभ्रातुः कन्यानां चर्चाः*
*तत्र जामाता श्री भगवती प्रसादः—*

ज्येष्ठस्यास्य सहोदरस्य महतः श्रीमन्महेन्द्रस्य ताः
कन्यास्तिस्र इहाभवँस्तु सुभगाः सत्पितृशीलावृताः ।
तास्वेका सुविवाहिता भगवतीयुक्तप्रसादेन सा
चम्पारण्यगते शिकारपुरके ग्रामे स्थिताऽऽसीत्तदा ॥४६९॥

*श्रीभगवती प्रसादाग्रजो मा० श्री विपिनविहारी वर्मा—*

धीमान् विपिनविहारी वर्माऽसौ "भगवती" ज्येष्ठः ।
लोकसभासभ्योऽद्य प्राक् सत्याग्रहसुनेता यः ॥५००॥

*जामाता श्री नर्मदेश्वर प्रसादः—*

अन्या चापि रफीपुरे सुविदिते सन्मण्डले सारणे
वाकीलेन सतां प्रियेण ससुखं सार्द्धं समुद्वाहिता ।
ख्यातेनात्र च नर्मदेश्वरपदाद्येन प्रसादेन या
कन्यादानविधौ हि यत्र समभूद् दाता स्वयं राष्ट्रपः ॥५०१॥

*दौहित्रेषु डा० श्री रत्नेश्वर प्रसादः—*

तत्पुत्रो वरडाक्टरोऽत्र विदितो यस्त्वेम०डी० भूपितः
श्रीरत्नेश्वरयुक्प्रसादसिनहेत्याख्यश्चिकित्सापटुः ।
सोऽसौ पाटलिपुत्रपत्तनगते श्रेष्ठे चिकित्सालये
राज्यस्थापित एव सत्पदधरो विभ्राजते कीर्त्तिमान् ॥५०२॥

*जामाता डा० श्री विद्यादत्त रामः —*

नाम्ना ख्यातमिहास्ति लक्ष्मणपुरं सद्भारते यच्चिरात्
तत्रत्येन हि डाक्टरेण विदुषा रामेत्युपाख्याभृता ।
विद्यादत्तसुनामकेन सह या सौम्या तृतीयाऽऽत्मजा
राजत्यत्र विवाहिता कुलयशःसंवर्धिनी नित्यशः ॥५०३॥

*सन्ततिपरिवृत्त्या प्रजापतित्वम्—*

श्रीराजेन्द्रप्रसादजीवसुधियो धर्मात्मनः पुत्रयो-
रेवं सोदरजस्य सङ्कलनया सर्वाः सुभाग्यान्विताः ।
पुत्र्यः पञ्चदशाङ्कितास्तनययोर्जातौ सुतौ द्वौ तयो-
र्मन्ये दक्षप्रजापतिः पर इव राजेन्द्र आभिस्त्वहो.॥५०४॥

*पौत्रीणां विवाहाः—*

तासां मध्ये परिमितानामकार्षीदुद्वाहान्त्सद्धर्मरीत्याऽत्र सम्यक् ।
कन्यादाने वस्त्रभूषाधनानां बाहुल्येन प्राकरोच्च व्ययं सः ॥५०५॥

*तत्र राष्ट्रपतेः पौत्री सौभाग्यवती "उषा"*
*तत्पतिः श्री जाह्नवीप्रसादः—*

सौम्या सेयमुषाऽभिधा धृतयशा ज्येष्ठा सुभाग्यान्विता
श्रीमृत्युञ्जय-कन्यका शुभभृता चायुष्मता श्रीमता ।–
ख्यातेनात्र च जाह्नवीति पदसद्भाजा प्रसादेन सा
पाणिग्राहमिताऽमितच्छवि-वृता संशोभते साम्प्रतम् ॥५०६॥

गोरक्षस्य पुरे सुखं निवसतः स्वर्गामिनः शारदा—
संयुक्तस्य प्रसादकस्य तनयो गाजीपुरे मुन्सिफः ।
नित्यं राजति जाह्नवीतिविदितः सोऽयं प्रसादाभिधो—
यो न्यायस्य विनिर्णये सुकुशलः प्रख्यातिमाप्तो मतः ॥५०७॥

*तत्सुतः श्री अशोक कुमारः—*

यथा शचीन्द्रौ-तनयं जयन्तं प्रोत्पादयाञ्चक्रतुरामुदा तम् ।
"उषा" तु साऽसावथ "जाह्नवी" श्चाशोकं कुमारं हि तथाऽऽप्नुतां तौ ॥५०८॥

*पौत्री सौभा० ऊर्मिला तत्पतिः श्रीकान्त श्रीवास्तवः—*

आजमगढस्य वासी श्रीनागेश्वरप्रसादो यः ।
तत्तनयः श्रीकान्तः श्रीवास्तव इत्युपाख्योऽस्ति ॥५०९॥

केन्द्रीयौषधशोधस्य गृहे लखनऊ-स्थिते ।
रसायनस्य संसिद्ध्यै वैज्ञानिक इहास्ति यः ॥५१०॥

अनेनोद्वाहिता सेयम् "ऊर्मिला" भाग्य-भूषिता ।
धनञ्जयसुता पुत्रौ यमलौ तावजीजनत् ।।५११।।

तत्तनयौ श्री हेमन्तजयन्तौ—

कल्याणनिलयौ बालौ कुलद्वयसुखप्रदौ ।
हेमन्तश्च जयन्तोऽथ संज्ञया यौ विभासतः ।।५१२।।

पौत्री सौ० सरोजदेवी तत्पतिः
डा० श्री ज्ञानमोहनः, तत्पुत्रो मधुकरः—

इन्कम्टैक्सपदाधिकारसुयुजः सद्द्वारवंग-स्थितेः
श्रीकामेश्वरयुक्प्रसादसुमतेः पुत्रेण दीर्घायुषा ।
ज्ञानेत्याद्यपदेन मोहनवरेणोद्वाहिता कन्यका
श्रीमद्वर्म जनार्दनस्य सुशुभा सेयं सरोजाभिधा ।।५१३।।

सद्भाग्यो डॉक्टरो भाति ज्ञानमोहन नामकः ।
राष्ट्रियस्य भौतिकस्य दिल्ल्यां याऽस्ति गवेषणा ।।५१४।।

तत्सम्पादन-संसिद्ध्यै वैज्ञानिक उदग्रधीः ।
तत्पुत्रः श्रीमधुकरो मोहनाख्यो विभासते ।।५१५।। (युग्मकम्)

पौत्री सौ० शशि देवी, तत्पतिः श्री कुमुदनन्दनः—

मृत्युञ्जयस्य चान्या कन्या "शशि" नामिका धन्या ।
कुमुदनन्दनेनेयं रचितोपयमाऽस्ति कल्याणी ।।५१६।।

लौह-कार्यालये सैष तातानां विश्व-विश्रुते ।
जमशेदपुरे भाति यान्त्रिकत्वमुपाश्रयन् ।।५१७।।

श्यामनन्दन सहाय-कनिष्ठ-देवनन्दन सहाय-सुतोऽयम् ।
ग्रामनाम किल तस्य हि बाघी यन्मुंजफ्फरपुरेऽति प्रसिद्धम् ॥५१८॥

*तत्पितृव्यो मा० श्यामनन्दन सहायः—*

एम्० पी० भूतो गुरु-गुण-निधिर्विश्वविद्यालयस्य
प्रख्यातोऽभूदुपकुलपतिर्विश्रुतेऽस्मिन् विहारे ।
वक्ता वस्तु-स्थिति-स्मृति-पटुः श्यामयुग् नन्दनोऽसौ
पितृव्योऽस्य प्रसृत-सुयशा यः सहायेत्युपाख्यः ॥५१९॥

*पौत्री सौ० निर्मला, तत्पतिः श्री राजकुमार श्रीवास्तवः—*

राजकुमारः श्रीवास्तव इति योहि मुरादाबादी ।
सोऽत्र धनञ्जय-सुतां "निर्मलां" प्राप्य विभात्यविषादी ॥५२०॥

अमेरिकीय पेट्रोल-कार्यालय-सुकार्यकृत् ।
चकास्ति सौम्यः श्रीराजकुमारो गुणसुन्दरः ॥५२१॥

*पौत्री सौ० किरण देवी, तत्पतिः श्री महेन्द्र प्रसादः—*

मृत्युञ्जय-तनया च परेयं "किरण" नामिका रम्या ।
श्रील महेन्द्र प्रसादकरे दत्ताऽऽस्ते सा गुण-नम्या ॥५२२॥

विभाभिर्भासते सोऽयं शास्त्रे वानस्पतौ सुधीः ।
राँची-राजमहाविद्यालयेऽध्यापकतां श्रितः ॥५२३॥

वाकीलो गुणमण्डित आखण्डित दोष-दुस्तिमिरः ।
मथुराप्रसादनामा तस्य पिताऽऽस्ते "गया"-वासी ॥५२४॥

योग्याँस्तान् स्वपतीँल्लब्ध्वा ललनास्ता विवाहिताः।
अभ्रे यथा विधुं प्राप्य द्योतन्ते तारका निशि ॥५२५॥

*पौत्रः श्री अरुण कुमारः—*

तत्र पितामहशीलं पितुश्च रूपं बिभर्त्तीह।
अरुणकुमारः पौत्रः श्रीमृत्युञ्जयसुतः श्रेयान् ॥५२६॥

विज्ञानशिक्षां श्रयते प्रकामं शीलं पितुश्चाप्यरुणः कुमारः।
स्वच्छां छविं यो निदधाति नित्यं भविष्णुता यस्य प्रसृत्वराऽऽस्ते ॥५२७॥

*पौत्रः श्रीबालकृष्णः —*

अपरः पौत्रस्तद्वच्छीलोऽसौ बालकृष्णोऽस्ति।
आकृत्या च प्रकृत्या धनञ्जयस्यात्मजः सौम्यः ॥५२८॥

पुत्रपौत्रादयः सर्वे श्रीराजेन्द्रमहात्मनः।
धर्मानुद्घोषयन्त्येते सम्पत्कीर्त्तिसमन्विताः ॥५२९॥

❀ ❀ ❀ ❀

*विहारेऽवतीर्णा विशिष्टा आत्मानः—*

अस्मिन् विहारे जनको बभूव
सीता सती साऽप्यथ याज्ञवल्क्यः।
तर्कप्रणेता सच गौतमोऽत्र
बुद्धो महावीर इहोदितश्च ॥५३०॥

*विहारस्य मुनि-भूमित्वम्—*

उञ्छ-वृत्तिमुपजीव्य तपःस्थाः
सत्य - तत्त्व - रसिकाश्छल - मुक्ताः।
लोक - मङ्गलदृशो मुनयस्ते
यत्र जन्म जगृहुश्च विहारे ॥५३१॥

*अत्र परीक्षिताः पाणिन्यादयः—*

पाणिनिः पतञ्जलिश्च पिङ्गलोऽथ वर्षकः ।
व्याडि नामकस्तथोपवर्ष संज्ञकोऽपरः ॥
वरेति पूर्वको रुचिश्च ते परीक्षितास्तदा ।
बभूवुरत्र विश्रुता बुधा वरेण्यतेजसः ॥५३२॥

*विहारस्य दिगन्त कीर्तिमन्तो विद्वाँसः—*

ज्योतिःशास्त्रे प्रथितसुयशा आर्यभट्टोऽत्र जातः
चाणक्योऽसौ जगति विदितश्चार्थकौटिल्यवेत्ता ।
ख्यातो भाष्यैर्विशद-विषयैर्दर्शनान्तु परेणा—
मद्यत्वे ऽप्युज्ज्वलयति जगद् मिश्रवाचस्पतिर्यः ॥५३३॥

चक्रे शास्त्र-विवादमद्भुतमहो श्रीशंकराचार्यतो—
विद्वान् मण्डन मिश्र नामक इहाख्यातो महान् यः पुरा ।
एवं शंकर-गोकुलोदयनका आचार्यवर्याः स्तुता—
अन्ये चापि बभूवुरत्र सुबुधा विद्याऽम्बुधेः पारगाः ॥५३४॥

*विहारे सम्राट् चन्द्रगुप्तः—*

दृष्ट्वा सैन्यबलं परं विजयकृद् यस्यात्र वीराग्रणीः
ख्यातः शाहसिकन्दरो बहुभिया शीघ्रं परावर्त्तत ।
शत्रोर्दुःसह इत्थमेव विमले प्रान्ते विहारेत्वभूत्
सम्राट् भारतवर्षकस्य प्रवरः सच्चन्द्रगुप्तः पुरा ॥५३५॥

*विहारे दयाऽहिंसाप्रचारकः सम्राडशोकः—*

बभूव भूपो हि विभासमानः
सद्भारतस्येह जगत्प्रसिद्धः ।
पुण्ये विहारे विदिते सुनामा-
ऽशोको महान् बुद्धपथानुयायी ।।५३६।

*करुणोद्रेकेणाशोकस्य युद्धवर्जनघोषणा—*

स्तव्या साहि कलिङ्ग-भूर्धृतयशा याऽशोक-सैन्यै रणे
मूर्ध्नश्छेदमुरीचकार न पुनः स्वातन्त्र्य-गर्वस्य च ।
धिक् साम्राज्यमनागसां वधविधौ संसक्तमित्यार्द्रधी—
र्युद्धोत्सर्जनमाजुघोष दयया, स्तव्योऽस्त्यशोकोऽप्यतः ।।५३७।।

*बुद्धानुगतस्याशोकस्य भारत-पञ्चशीले नीतिः—*

प्रेमाहिंसाप्रचारेऽस्य निहितमनसौ संघमित्रा-महेन्द्रौ
पुत्री-पुत्रौ विदेशेष्वपि धृतयशसौ पर्यटाञ्चक्रतुस्तौ ।
देशे चाशेषभागे प्रसरणमयिताः स्वीयसिद्धान्तलेखा
एषा ऽशोकस्य नीतिः सपदि विजयते पञ्चशीलस्य मूले ।।५३८।।

*अत्रैवजनविद्रोहनेतारौ वीरौ कुमरामर सिंहौ—*

अंग्रेजेषु प्रशास्तृषु सैनिक - विद्रोहकाले प्राक् ।
कुमरामर सिंहाविह जन-विद्रोहेऽग्रगौ वीरौ ।।५३९।।

*विहारस्यैव वैशाल्यां सर्वप्रथमं गणराज्यम्—*

यत्रोद्गतञ्जगत्यां सर्वप्रथमं हि गणराज्यम् ।
वैशाली लिच्छवि-भूरिहैव समुदग्र-जागर्त्ति ।।५४०।।

   

राष्ट्रपतितो देश प्रान्तसमाजगौरवम्—

अद्यापि सद्राष्ट्रपतिःप्रतापी
विहारवासीहविराजतेऽसौ।
राजेन्द्रनामाऽमित कीर्त्तिधामा
स्वातन्त्र्यकाले भुवि भारतस्य ॥५४१॥

धर्मशीलदेशस्यानुरूपो राष्ट्रपतिः—

धर्मेण युक्तं भुवि भारतं सद्
निरन्तरं संस्कृतिपोषकं यत्।
अत्रोचितं भाति सुपुण्यदेशे
धर्माश्रितो राष्ट्रपतिः प्रसिद्धः ॥५४२॥

राष्ट्रपते राजर्षित्वञ्च—

सर्वश्रेष्ठपदस्थितोऽपि निजया वृत्या वितृष्णायुजा
माधुर्येण नयेन चारुवचसा प्रेम्णाऽथ सत्येन तु।
देशस्यामित-सेवयाऽनवरतं लोकोपकृत्या तथा
राजर्षित्वमुपैति राष्ट्र-सुपतिर्दिव्यैस्तपोभिर्वृतः ॥५४३॥

राष्ट्रपतेरभिनन्दनम्—

प्रोद्दीप्ते भवतां यशस्यतितमां देशोऽयमुद्द्योतते
प्रोद्बुद्धे भवतां गुणेऽयमधुना प्रान्तः समुद्बुध्यते।
सम्मानं परगौरवं वयमहो सम्प्राप्नुमो यैर्नुताम्—
श्रीराजेन्द्रप्रसाद सद्-गुणगणान् हृष्ट्याऽभिवन्दामहे ॥५४४॥

"विद्यामार्त्तण्ड" एषोऽप्रमितमतिलसद्विद्यया ख्यातकीर्त्या
लोकानां सेवया चाप्रतुलितमहिमा यो महामानसोऽत्र ।
स्वातन्त्र्यं प्रापयित्वा भरतभुवि जनेभ्यश्चिरं वाञ्छितं तत्
सोऽसौ श्री राष्ट्रनाथो जनगणहितकृद् भ्राजते लोकवन्द्यः ॥४४५॥

एवं सुदीर्घं विततं सुपूर्णं कदाऽपि जातं नहि भारतं प्राक् ।
यथाभवद्राष्ट्रपतित्वकालेऽदो भारतं भाति गुरुत्वमाप्तम् ॥४४६॥

*एतत्कृते शुभकामना—*

भव्यानां भावनानां निधिरयमुचिताचारभाजां वरीया-
नुद्यद्दीव्यद्विचारो मधुमयवचनश्चातुरीसीम्नि राजन् ।
स्वातन्त्र्यप्राप्तिनिष्ठोऽधनजनशरणं देशबन्धप्रभेत्ता
सोऽयं राजेन्द्रबाबूः शतमिह जयताच्चारुकीर्तिप्रतापः ॥५४७॥

देशप्रेमैव यस्य व्रतमिह विलसत्युच्चबुद्धिप्रकर्षै-
र्यो नेतॄणां पुरस्तादुदितमिव महत्तेजसां पुञ्जमेव ।
गाम्भीर्येणाब्धिरेव प्रमहितमहिमाऽलङ्घ्यसत्त्वोऽतिनम्रः
श्रीमद्राजेन्द्रदेवो जयति हि नितरां नीरुजः सन्शतायुः ॥५४८॥

आर्यत्वं परमस्ति साधुचरितार्ये भवत्युज्ज्वलं
देशस्त्वार्य इहैव तत् कथमहो रज्येत नो श्रीमति ।
आर्यां संस्कृतिमत्र तज्जनिपदां सत्संस्कृतां भारतीं
रक्षन् राष्ट्रपतेः पदे चिरतनं राजेन्द्र ! राजस्व सत् ॥५४९॥

सकलगुणनिधानं शास्त्रनीतौ सुसक्तो-
विविधबुधवरेण्यो देशसेवानुरक्तः ।
सुविदितमहिमाऽयं पुत्रपौत्रैः सुयुक्तो-
जयति जयति राजेन्द्रोऽत्र गोविन्दभक्तः ॥५५०॥

*अस्य विश्वशान्तिनेतृत्वम्—*

विद्वन्मण्डनमण्डितेऽतिविभवे पुण्याकरे शोभने
रत्नाद्यैः परिपूरिते सुखमये श्रीभारते भास्वति ।
श्रीराजेन्द्रप्रसाद एष हितकृत् प्रोद्योतते साम्प्रतं
यो नेतृत्वमुदञ्चितं प्रकुरुते विश्वस्य शान्त्यै सदा ॥५५१॥

*प्रशस्तिग्रन्थतो जनरञ्जनत्वकामना—*

आर्यायां संस्कृतौ स्वां रुचिमधिदधतः संस्कृतोत्थानकर्त्तु-
र्मर्यादापालकस्यामितसुमतिमतो धर्मसंरक्षकस्य ।
लोकक्षेमाय नित्यं प्रयतितसुरुचेः शान्तिनीतिप्रणेतु-
राजेन्द्रस्य प्रशस्तिर्जनगणमनसां रञ्जनायाञ्जसा स्तात् ॥५५२॥

*ग्रन्थविषयकलोकप्रीत्या श्रमसाफल्यम्—*

सार्द्धं स्वीयजनैर्वृतस्य विदुषः पुण्यात्मनः श्रीमतो-
राजेन्द्रस्य महात्मनो मतिमतः संवर्णनैः श्रेयसः ।
देशप्रेमवतां भवेद् यदि रुचिर्ग्रन्थस्य पाठे क्वचिन्-
मन्ये धन्यतमः श्रमोऽत्र भविता प्रेयान्ममासौ तदा ॥५५३॥

**ग्रन्थसमाप्तिसमयः**

युगाचलाव्योमभुजाङ्किते ऽब्दे<br>
श्रीवैक्रमे शुक्लदले दशम्याम् ।<br>
शुभाश्विने श्रीविजयोत्सवे मे<br>
ग्रन्थः समाप्तिं गत एष भव्यः ॥५५४॥

**इष्टवन्दना—**

यस्याः पादसरोरुहस्मरणतो विघ्नावली निर्गता<br>
काव्यालङ्कृतभारतीभिरिह मे ग्रन्थोऽद्य पूर्त्तिं गतः ।<br>
तां विश्वस्थितिरक्षिणीमभयदां देवैः समाराधितां<br>
श्रीमद्दक्षिणकालिकां वरकरां वन्दे जगन्मातरम् ॥५५५॥



# ग्रन्थकर्तृपरिचयः

गङ्गातटे पुण्यमये प्रसिद्धे सौम्येऽत्र वैकुण्ठपुरे महेशम् ।
सदा स्थितन्तं गिरजासमेतं वैकुण्ठनाथं शिरसाऽभिवन्दे ॥१॥

*ग्रामः —*

ख्याते पाटलिपुत्रमण्डलवरे गङ्गातटे शोभने
श्रीवैकुण्ठपुराभिधं पुरवरं रम्यञ्चिराद्राजितम् ।
श्रीगौरीशिवमन्दिरं विलसितं यत्रास्ति तीर्थं परं
श्रीमत्पण्डितपूर्वजा मम सुखं तत्र स्थितिं लेभिरे ॥२॥

*ग्रन्थकारस्यातिवृद्धप्रपितामहः—*

तत्र प्राक् तन्त्रविद्यः पटुतममधिपणो मन्त्रशास्त्रे पटिष्ठः
त्रिस्कन्धे ज्यौतिषे योऽप्रतिममतिरुवासैप वंशीधराख्यः ।
झोपाढ्यो योगसक्तः प्रविदितसुयशा मैथिलो विप्रवर्यो-
यस्य ज्ञानप्रभावैर्यवनजनपतिर्वश्यतां तस्य यातः ॥३॥

*मिथिलातोऽत्रावासकारणम्—*

यस्याशीर्वचनान्नवाबमनिरुद्दौलास्तदानीं मुदा
दिल्लीशान्नृपतेरवाप्य शुशुभे प्रान्ताधिपत्वं पदम् ।
भक्त्याऽतो विदुषे ददौ वसुमतीं जागीरनामाङ्कितां
त्यक्त्वा तां मिथिलां तु तेन मगधास्तस्मात्सनाथीकृताः ॥४॥

*वृद्धप्रपितामहः—*

श्रीमत्काली - चरणयुगलध्यानलग्नो महात्मा
देवीदत्तस्तनय उदितस्तस्य वंशीधरस्य ।
लोके ख्यातो महितमहिमा दर्वतन्त्रस्वतन्त्रो-
योऽभूत् पित्रा सम इह गुणश्शीलसौजन्यपात्रम् ॥५॥

*प्रपितामहः—*

वाबूलालो विविध-गुणभृत् तत्सुतो यो बभूव
विद्यादानैः प्रसृतसुयशाः सर्वमान्यो विशिष्टः।
नित्यं धर्मप्रहितहृदयो दानकृत्यप्रवृत्तो-
लोकाचार - प्रचयचतुरो वंशसम्पत्समेतः ॥६॥

*पितामहः—*

तत्सूनुर्भगवन्नृसिंहचरणाम्भोजं परं पावनं
सन्ध्यायन्सुतरां रराज सुकृती गोपालशर्मा सुधीः।
गोविप्रप्रतिपालको बहुधनं दीनोपकृत्यै ददद्
यो वेदामरभारतीञ्च नितरामुर्दूं तथा फारसीम् ॥७॥

*पिता—*

श्रीमद्दक्षिणकालिकार्चनरतो विप्राग्रगस्तत्सुतो-
ज्योतिर्ज्ञानविचक्षणोऽतिगरिमा सत्कर्मनिष्ठो महान्।
नानाशास्त्रपुराणतर्कनिपुणो ज्योतिर्विदां गौरवं
दानी धर्मदयापरो बुधनुतो 'झा' उग्रनाथोऽभवत् ॥८॥

निर्भीर्निर्बाधवर्त्मा फलकथनविधावर्जयत् ख्यातकीर्त्ती-
राजा स्वोच्चस्तरेणाचरणनिपुणता कर्मणाऽऽसीन्महर्षिः।
ज्ञानी दानी स एवं जगति सुविदितः श्रीसरस्वत्युपेत-
स्त्रिस्कन्धे ज्यौतिषे यो गुरुरिव स महानुग्रनाथः पिता मे ॥९॥

आश्चर्यं सत्ययुक्तं फलकथनममहो यस्य संश्रुत्य भक्त्या
प्रागच्छन् दिगदिगन्ताद् बहुविधजनता राजरङ्का यदग्रे।
त्रिस्कन्धं ज्यौतिषं यः सुविशदमतिभिर्वेद सज्ज्ञानराशि—
रासीद् विद्याधनो मे महित इह पिता भारतख्यातनामा ॥१०॥

रचयिता—

तस्यात्मजो राजति विष्णुकान्तः पादाम्बुजं पूज्यपितुः प्रणम्य।
स्वान्ते स्वकीये सुखमाश्रितः श्री- राजेन्द्र-कीर्त्ति विरचय्य वृत्तैः ॥११॥



